**Oriental Research Institute Series No. 192**
**University of Mysore**
**प्राच्यविद्यासंशोधनालयग्रन्थमालां - १९२**
**मैसूरु विश्वविद्यानिलयः**

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

श्रीनिवासतीर्थ-नरसिंहाचार्य-वेदव्यासाचार्याणां
टीकाभिरलङ्कृता

# THE SADĀCĀRASMṚTI

of

Śri Ānandatīrtha Bhagavatpādācārya

with

Glosses of Śri Śrīnivāsatīrtha- Narasiṃhācārya
and Vedavyāsācārya

Critically edited by
Vidwan A. V. Nagasampige M.A.

**Oriental Research Institute, Mysore**
**2000**

**Price: = 72=00**

**Oriental Research Institute Series No. 192**

**University of Mysore**

प्राच्यविद्यासंशोधनालयग्रन्थमाला - १९२

मैसूरु विश्वविद्यानिलयः

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

श्रीनिवासतीर्थ-नरसिंहाचार्य-वेदव्यासाचार्याणां

टीकाभिरलङ्कृता

# THE SADĀCĀRASMṚTI

**of**

**Śri Ānandatīrtha Bhagavatpādācārya**

**with**

**Glosses of Śri Śrīnivāsatīrtha- Narasiṃhācārya and Vedavyāsācārya**

**Critically edited by**

**Vidwan A. V. Nagasampige M.A.**

**Oriental Research Institute, Mysore**

**2000**



**Price: 72-00**

*First Edition - 2000*



*Sponsored by*
**Sri 1008 Sri Vishweshatirtha Swamiji
Pejawarmatha, Udupi**

*Copies: 1000*

*Published by*
**The Director
Oriental Research Institute
University of Mysore
Mysore-570 005**

***Printed by***
**Sudharma Offset Printers
No. 561, 2nd Ramachandra Agrahara,
Mysore-570 004**

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

श्रीनिवासतीर्थ-नरसिंहाचार्य-वेदव्यासाचार्याणां
टीकाभिरलङ्कृता

प्रधानसम्पादकः
डा. के. वि. रमेशः
गौरवनिर्देशकः
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
2000

# THE SADĀCĀRASMṚTI
of
## Śri Ānandatīrtha Bhagavatpādācārya

with

**Glosses of Śri Śrīnivāsatīrtha- Narasiṃhācārya and Vedavyāsācārya**

General Editor
**Dr. K. V. Ramesh**
Honorary Director

**Oriental Research Institute, Mysore**
2000

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

श्रीनिवासतीर्थ-नरसिंहाचार्य-वेदव्यासाचार्याणां
टीकाभिरलङ्कृता

सम्पादकः
विद्वान् ए. वि. नागसम्पिगे एम्.ए.
न्याय-वेदान्तविद्वान्
संशोधकः
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
2000

# THE SADĀCĀRASMṚTI

of

Śri Ānandatīrtha Bhagavatpādācārya

with

Glosses of Śri Śrīnivāsatīrtha- Narasiṃhācārya
and Vedavyāsācārya

Critically edited by
Vidwan A. V. Nagasampige M.A.
Nyaya-Vedanta Vidwan
Research Assistant
Oriental Research Institute, Mysore

Oriental Research Institute, Mysore
2000

# Foreword

Śaṅkara, Rāmānuja and Mādhva are the three preceptors who gave a new dimension to the philosophical thought of India.

Śri Madhvācārya (1238 to 1317 A. D.) had sanctified by his birth and childhood, the sacred place called Pājaka, near Udupi in the first half of the thirteenth century. He was an unequalled thinker in the realm of philosophy. He was a prolific writer who contributed valuable works to various fields like Veda, Itihāsa, Purāṇa, Tantraśāstra, Musicology, Architecture, Dharmaśāstra and Stotrasāhitya.

A short work of his is the Sadācārasmṛiti, now being brought out with three commentaries which were till now unpublished. All the three commentaries are the work of outstanding scholars of the Mādhva school of thought who flourished in the 16th and 17th century.

The purpose of Śri Mādhvacārya in writing this small treatise is to awaken the ethical values in society and to uplift the moral standards of the common people.

These four works, i.e. the Sadācārasmṛti and the three commentaries thereon, contain many new thoughts which throw a flood of light on the social fabric.

Vidwan A. V. Nagasampige M. A., a noted scholar in the arena of Dvaita Philosophy, has edited these four works utilising many manuscripts of our institute. His acumen in deciding the right readings and in providing the necessary footnotes is evident on each page of the present work. Needless to say, only an expert in editing ancient Sanskrit works can do this kind of job. Our beloved Vice-chancellor suggested a few months ago that translations in Kannada and English should be provided to Sanskrit works so that they become accessible to the common people who might not be able to read the original Sanskrit works. Accordingly, Vidwan

Nagasampige has translated the work into Kannada. Sri S. V. Gururaj has prepared the English translation on the basis of the Kannada translation. I have no doubt that these translations will enhance the value of the present publication.

Hereafter, the works on scientific subjects which are going to be published in the near future will contain Kannada and English translations. I believe that the books will thus be more useful to the readers.

I heartily congratulate the able editor Sri Nagasampige and the English translator Sri S. V. Gururaj.

The entire expenditure in publishing this volume has been borne by Sri Sri Visvesha Tirtha Sripadangalavaru of Sri Pejawara Matha, Udupi. I record my sincere thanks to His Holiness for his benevolence.

I acknowledge the help extended by our Vice-Chancellor Prof. S.N. Hegde for the publication of Sanskrit classics. My thanks are due to the Registrar Prof. V.G.Talwar and Finance Officer Sri Mahadevaswamy for their co-operation. Our gratitude is due to M/s Sudharma Offset Printers for their neat work.

K. V. Ramesh
Hon. Director
O.R.I. Mysore

## प्रस्तावना

नितान्तं हृष्यति मे मनः यत् प्राच्यविद्यासंशोधनालयग्रन्थमालायाः द्विनवत्यधिकशततममिदं (192) पुष्पं प्राकाश्यं नीयत इति ।

'अनादिकालतो वृत्ताः समया हि प्रवाहतः ।' इति प्रमाणानुसारेण सर्वेऽपि समयाः अनादिकालतः प्रवृत्ताः, अत एव ते प्रवाहतोऽनादय इति कथ्यन्ते । कालक्रमेण तेषु सिद्धान्तेषु मलिनेषु तेषां पुनरुज्जीवनाय तत्तन्मताचार्याणाम् आगमनमिति समेषां विदितमेव ।

एवमेव द्वैतदर्शनस्य प्रवाहतोऽनादेः पुनरुज्जीवनार्थं, तस्य सिद्धान्तस्य प्रसारणार्थम् अवतीर्णाः श्रीमदानन्दतीर्थभगवत्पादाचार्याः । मध्वाचार्याः, आनन्दतीर्थाः, द्वैतमतप्रतिष्ठापनाचार्याः, इति तेषामेव नामान्तराणि । द्वैतदर्शनप्रसारार्थं, वायोः तृतीयावतारभूतैः मध्वाचार्यैः सप्तत्रिंशत् (37) सङ्ख्याकाः ग्रन्थाः रचिताः वर्तन्ते । तेष्वन्यतमः सदाचारस्मृतिनामकोऽयं ग्रन्थः ।

'आचारः प्रथमो धर्मः धर्मस्य प्रभुरच्युतः' इति प्रमाणानुसारेण, 'आचारहीनं न पुनन्ति वेदाः' इति प्रमाणानुसारेण च साधकेन पुरुषेण आचारवता भाव्यम् । परिशुद्धाचारानुसरणेन शरीरशुद्धिः, ततो मनश्शुद्धिः, शुद्धेन मनसा कृतेन ध्यानेन भगवत्साक्षात्कारः, ततो प्रारब्धकर्मोपभोगानन्तरं चरमशरीरपरित्यागे सति मोक्षः। एवं मोक्षरूपपरमपुरुषार्थप्राप्त्यर्थम् अनेकानि सोपानानि वर्तन्ते । तत्र प्रथमं सोपानं, परिशुद्धाचारः । स एव शास्त्रसम्मतः, श्रुतिस्मृतिप्रतिपाद्यः आचाररूपः धर्मः ग्रन्थोऽस्मिन् प्रतिपाद्यते । प्रातः प्रभृति सायान्तं साधकेन पुरुषेण किं कर्तव्यम् ? कथं वर्तितव्यम् ? स्वेन क्रियमाणेषु सर्वेष्वपि कार्येषु भगवदर्पणबुद्ध्या भाव्यम् इति मार्गदर्शनमत्र क्रियते ।

**'स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि ।**
**धौतदन्तः समाचम्य स्नानं कुर्याद्विधानतः ॥'**

हरिस्मरणपूर्वकं ब्राह्मे मुहूर्ते शयनादुत्थाय मङ्गलवस्तूनि दृष्ट्वा शास्त्रोक्त-विधिना शौचं समाप्य, गण्डूषानन्तरं दन्तधावनं कृत्वा, तत आचम्य, विधिपूर्वकं

स्नानं कुर्यात् इति प्रातरारभ्य रात्रौ शयनपर्यन्तं कर्तव्यकर्माणि अस्मिन् ग्रन्थे विव्रियन्ते।

एवं सदाचारं निरूप्य अन्ते ग्रन्थकारा एवं वदन्ति -

**'स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित् ।**
**सर्वे विधिनिषेधास्स्युरेतयोरेव किङ्कराः ॥'**

एतावत्पर्यन्तं विधिनिषेधाः प्रतिपादिताः । इदं कर्तव्यम्, इदं न कर्तव्यं, इदं भोक्तव्यं इदं न भोक्तव्यम् । इत्यादि विधिनिषेधाः श्रुतिस्मृत्यनुसारेण प्रतिपादिताः । एतादृशविधिनिषेधरूपशास्त्रोक्तकर्मकरणपूर्वकं सदा भगवतः स्मरणं कर्तव्यम् । न कदापि तस्य विस्मरणं कर्तव्यम् । अयमेव परमो धर्मः यत् सर्वदा हरिस्मरणं कर्तव्यम् । न कदापि हरिः विस्मर्तव्य इति ।

एवं मुमुक्षोः अत्यावश्यककर्तव्यदर्शकोऽयं ग्रन्थः सर्वैः मुमुक्षुभिः साधकैरादरणीय एव ।

अयं च ग्रन्थः व्याख्यात्रयसमलङ्कृतः । श्री श्रीनिवासतीर्थविरचितं **'आह्निककौस्तुभ'**नामकं प्रथमं, श्री नृसिंहाचार्यविरचितं 'प्रकाशिका'नामकं द्वितीयं, श्री मुद्गलवेदव्यासाचार्यविरचितं 'तन्त्रदीपिका'नामकं तृतीयं व्याख्यानमत्रोपनिबद्धम् । एवं व्याख्यात्रयसमलङ्कृतोऽयं ग्रन्थः प्राच्य - विद्यासंशोधनालयस्थानां, तथा अन्यत्र विद्यमानानां हस्तप्रतीनां साहाय्येन सम्पादितः ।

**अस्य ग्रन्थचतुष्टयस्य च मुद्रणं येषां धनसाहाय्येनैव सम्पन्नं, तान्, सकलविद्याविशारदान् कारुण्यौदार्य-लोकोत्तरप्रतिभा-वाक्यार्थपाटवादिगुणगण-समलङ्कृतान् पेजावरमठाधीशान् श्रीमद्विश्वेशतीर्थश्रीमच्चरणान् भक्तिश्रद्धापूर्वक -प्रणतिभिः प्रीणये । परश्शतनिबन्धप्रणेतारः विद्वज्जनमुकुटमणयः गुरुचरणाः, मादृशानां द्विशताधिकविद्यार्थिनामध्यात्मविद्याऽन्नवस्त्रप्रदानेनान्वगृह्णन् । घोरे कलावस्मिन् युगे यदीयकृपाकटाक्षेणाद्याऽपि भारतभुवि अध्यात्मविद्या समुल्लसति सम्प्रवर्धते च, यैर्मनुकुलहिताय परमसुखाय च रन्तिदेव इव सर्वेषां क्लेशाः**



**स्वीकृताः, स्थापिताश्च वेदशास्त्र-विद्यालयाः, शुल्कानपेक्षेण सकलजनसौख्याय**

वैद्यशालाः निर्मिताः, तेषां परोपकारार्थमेव पावनशरीरधारिणां गुरुचरणानां चरणयोः सकार्तज्ञ्यं प्रणतिततीरर्पये ।

ग्रन्थस्य सम्पादकः, अस्यां संस्थायां ज्येष्ठसहायकसंशोधकः, विद्वान् आनन्दतीर्थनागसम्पिगे महोदयः । अयन्तु न्यायशास्त्रे तथा वेदान्तशास्त्रे कृतपरिश्रमः। विद्वान्, एम्.ए. इत्यादि पदवीधरः । अनेन शुद्धपाठप्रदाने महान् श्रमः स्वीकृतः । तत्र तत्रोचिताः लघुटिप्पण्यः अमुद्रितव्याख्याविशेषाः अपूर्वप्रमेयाश्च नागसम्पिगेमहाभागेन प्रदत्ताः । ग्रन्थोऽयं विदुषां परितोषाय भवतीति विश्वसिमः ।

संशोधनालयस्यास्य निर्देशकाः श्रीमन्तः डा. के. वि. रमेशमहाभागाः दक्षाः, समर्थाः, समेषां विदुषां प्रीतिभाजः, तेषां प्रोत्साहेनैवात्र कार्याणि त्वरितगत्या प्रचलन्तीत्यत्र न संशयः ।

ग्रन्थस्यास्याध्ययनेन, सहृदया, विद्वांसः तोषं प्राप्नुयुः इत्याशासेऽहम् ।

मैसूरु
30-05-1999

इति
सुधीविधेयः
'पाण्डितरत्नं' 'विद्यावाचस्पतिः'
'वेदान्तभूषणम्' 'प्रवचनचतुरः'
'न्यायवेदान्तविद्वान्'
**आर. जि. माळगी एम्.ए.**
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

## प्राङ्निवेदनम्

मोमुद्यते नश्चेतः, व्याख्यात्रयसमलङ्कृतसदाचारस्मृतिग्रन्थस्य प्रकाशनेन। सदाचारस्मृतिः, श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीता, श्रीव्यासवाक्यसमुद्धृतिरूपा। आह च स्वयमेव भगवत्पादाचार्यः -

'आनन्दतीर्थमुनिना, व्यासवाक्यसमुद्धृतिः ।

सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ।।'

इति। परिमाणेनाल्पाऽपि अर्थगाम्भीर्येणानल्पेयं सकलवेदान्त-धर्म-तन्त्रशास्त्रादिसाररूपा देदीप्यते ।

### आनन्दतीर्थभगवत्पादाचार्याः (1238-1317 A.D.)

अस्मिन्नेव कर्णाटकराज्ये रजतपीठपुरादनतिदूरे पाजकनामकक्षेत्रे त्रयोदशशतके अवतेरुरमी महानुभावाः । नारायणनडिल्लायः वेदवती च मातापितरौ । अच्युतप्रज्ञा एतेषां दीक्षागुरवः । आनन्दतीर्थ इत्याश्रमनाम। वेदशास्त्रेषु मुख्यप्राणावतारभूता इति प्रथितानां आनन्दकरशास्त्रप्रणयनात् आनन्दतीर्थ इति; मध्वाचार्य इति च प्रसिद्धम् । श्रीमदानन्दतीर्थ - भगवत्पादाचार्याः, पूर्णप्रज्ञाः सर्वज्ञाश्चेत्यत्र तेषां ग्रन्था एव प्रमाणभूताः। भगवत्पादाचार्यैरस्पृष्टः कश्चन विषय एव न विद्यते । वेद-पुराण-सूत्र-महाभारत-धर्मशास्त्र-तन्त्रशास्त्र-गन्धर्वशास्त्रादि -संकलशास्त्रेष्वपि प्रज्ञापूर्णताप्रद्योतकाः ग्रन्थास्तैः प्रणीताः । तदीयप्रबन्धैः सनातनो वैदिकसिद्धान्तः प्रकटीकृतः, अनुगृहीताश्च सज्जना इत्यतिरोहितं विपश्चिताम्।

### (1) आनन्दतीर्थभगवत्पादाचार्यप्रणीता सदाचारस्मृतिः

प्रातःप्रभृति सायान्तं सायादिप्रातरं तथा यद्यत्कर्म श्रीहरिपूजारूपत्वेन कर्तव्यं तस्य सर्वस्याऽपि सङ्ग्रहोऽस्मिन् ग्रन्थे कृत इति महदिदं कौशलं भगवत्पादाचार्यस्य । भगवतः श्रीकृष्णस्यानने यशोदा ब्रह्माण्डमेवाद्राक्षीदिति कथा, केन वाऽश्रुता । भगवत्पादीयानल्पार्थोपबृंहितग्रन्थावलोकनपराणां

विदुपामपि तादृश एवानुभवः समस्तीत्यत्र वेदशास्त्रपारङ्गताः सन्त एव प्रमाणम् । मातृकात्रयसाहाय्येन सदाचारस्मृतिमूलपाठः निर्दिष्टः । विद्यारत्नाकरोपाधिविभूषितैः वन्नञ्जे गोविन्दाचार्यैः संशोधितः हृषीकेशतीर्थीयपाठोऽपि उट्टङ्कितः । सकलवेदशास्त्रपुराणोक्त - सज्जनाचारसङ्ग्राहकस्यास्य ग्रन्थस्य त्रयो व्याख्याग्रन्था अत्र निवद्धाः । तत्र सर्वप्रथमः श्रीनिवासतीर्थाचार्यप्रणीतः आह्निककौस्तुभः ।

## (2) श्रीनिवासतीर्थविरचितः आह्निककौस्तुभः (1590-1674)

एते विद्वन्मूर्धन्याः श्रीमदुत्तरादिमठीयरघूत्तमस्वामिपादानां (1541-1646) विद्यासन्ततिप्रवर्तकाः । एतेषां गुरुचरणाः श्रीमद्यादवाचार्याः सुतनिर्विशेषं श्रीनिवासस्य शास्त्ररहस्यमुपदिष्टवन्तः । श्रीनिवासतीर्थाचार्याणां गुरुभक्तिरसाधारणी । पश्यन्तु कोविदास्तेषां वचनप्रसूनमालाम् -

यत्पादस्मृतिमात्रेण पाण्डित्यं प्राप्यते नरैः ।
तान् वन्दे यादवाचार्यान् वेदेशमुनिसेवकान् ।।

अणुभाष्यटीका

यैरहं शुकवत्सम्यक् शिक्षितोऽस्मि कृपालुभिः ।
तान् वन्दे यादवाचार्यान् वेदेशमुनिसेवकान् ।।

माण्डूक्यभाष्यविवृतिः

श्रीमध्वशास्त्रं समुदीर्य यस्मिन् विश्वासहेतोः समदर्शयन् ये ।
प्रदानसूत्रप्रतिपाद्यभावं वन्दे गुरूंस्तान् यदुवर्यसंज्ञान् ।।

आथर्वणोपनिषद्भाष्यविवृतिः

## ग्रन्थसेवा

सकलशास्त्रपारङ्गता एते पञ्चाशदधिकग्रन्थप्रणयनेन माध्ववेदान्तं प्रवृद्धमकार्षुः । ग्रन्थाश्च केचन अधोनिर्दिष्टाः -

1. न्यायसुधाटिप्पणी 2. तत्त्वप्रकाशिकाटिप्पणी 3. अणुभाष्यटीका 4.

गीताभाष्यप्रमेयदीपिकाटिप्पणी 5. ईशावास्योपनिषद्भाष्यटीकाटिप्पणी 6. माण्डूक्योपनिषद्भाष्यविवृतिः 7. तैत्तिरीयोपनिषद्भाष्यविवृतिः 8. आथर्वणोपनिषद्भाष्यविवृतिः 9. ऋग्भाष्यटीकाविवृतिः 10. ऋगर्थोद्धारः 11. एकादशस्कन्धतात्पर्यविवरणम् 12. तन्त्रसार-मन्त्रोद्धारः 13. आह्निककौस्तुभः (सदाचारस्मृतिव्याख्यारूपः) 14. तत्त्वसङ्ख्यानटीकाविवृतिः 15. तत्त्वविवेकटीकाविवरणम् 16. तत्त्वोद्योतटीकाविवृतिः 17. विष्णुतत्त्वनिर्णयटीकाविवृतिः 18. प्रमाणलक्षणटीकाविवृतिः 19. उपाधिखण्डनटीकाविवृतिः 20. मायावादखण्डनटीकाविवृतिः 21. प्रपञ्चमिथ्यात्वानुमानखण्डनटीकाविवृतिः 22. कर्मनिर्णयटीकाविवृतिः 23. प्रमाणपद्धतिवाक्यार्थः 24. वादावलीप्रकाशः 25. नारायणशब्दार्थः 26. भ्रमरगीताव्याख्या 27. सर्वमूलाद्यन्तश्लोकसङ्ग्रहः 28. श्रीटीकाद्यन्त - श्लोकसङ्ग्रहः 29. व्यासनामावली 30. श्रीरङ्गनाथनवरत्नमालिका 31. मध्वनामावली 32. श्रीमुख्यप्राणस्तोत्रगद्यम् 33. तारतम्यनवश्लोकी 34. ब्रह्मपारस्तवव्याख्या 35. नखस्तुतिव्याख्या 36. ग्रन्थमाला 37. जयार्यस्तुतिः 38. पदार्थचन्द्रिकाव्याख्या 39. कथालक्षणटिप्पणी 40. षट्प्रश्नभाष्यटिप्पणी 41. महाभारततात्पर्यनिर्णयटिप्पणी 42. गीतातात्पर्यटीकान्यायदीपिकाटिप्पणी 43. भेदोज्जीवनटिप्पणी 44. पुरुषसूक्तार्थः 45. वायुस्तुतिव्याख्यानम् 46. अधिकरणार्थसङ्ग्रहः 47. विक्षिप्तखण्डार्थसङ्ग्रहः

सुस्पष्टा सरला मन्द-बुधजनोभयरञ्जिनी व्याख्यैतेषां मनोह्लादिका । अत एवैतेषां शास्त्रव्याख्याकौशलं पाठ-प्रवचनदीक्षां चासाधारणीं समवलोक्य पद-वाक्य-प्रमाण-पारावारपारीणाः श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणाः यतिसम्बोद्ध्य 'तीर्थ' इत्युपाधिप्रदानेन अन्वगृह्णन् इति ऐतिह्यं प्राक्तनानां जागर्ति । यावद् बाधकप्रमाणं नोदेति तावदैतिह्यसत्यत्वं सर्ववादिसिद्धमेव । श्रीनिवासतीर्थीयव्याख्या, मातृकात्रयसाहाय्येनात्र यथामति शोधिता । अत्र चानेके अपूर्वाः विषयाः विमृष्टाः विदुषां सुग्रहा एव । मया द्वित्रा विषयाः

कर्णाटकभाषानुवादे निरूपिताः । सर्वोऽप्ययं ग्रन्थोऽध्येय इति विद्वत्सु निवेदये ।

## (3) नरसिंहाचार्यप्रणीता भावप्रकाशिका (1675 A.D.)

सदाचारस्मृतिग्रन्थस्य द्वितीयात्र मुद्रिता व्याख्या भावप्रकाशिकानाम्नी । अस्याः कर्ता धर्माचार्यसूनुः नरसिंहाचार्यः । एतेषां गुरुचरणाः श्रीमदुत्तरादिमठाधीशाः श्रीसत्याभिनवतीर्थश्रीमच्चरणाः (1673-1706) श्रीमच्चरणास्तु पद-वाक्य-प्रमाणपारावारपारीणाः नैकप्रबन्धनिर्मातारः तपोनिधयः विश्रुतौदार्यादिगुणाः । नृसिंहाचार्यः ग्रन्थादौ 'सत्यनूत्नयतीन् गुरून्' इति स्तौति चाध्यात्मविद्योपदेशकान् ।

एभिः मन्त्रमालापूजापद्धतिः सन्ध्याविधिरिति च द्वौ ग्रन्थौ कृताविति भावप्रकाशिकायामुल्लिखितम् । व्याख्या चेयं विस्तृताऽपूर्ववाक्यार्थसमलङ्कृता च । कर्णाटकभाषानुवादे तत्र तत्र व्याख्याविशेषांशाः निरूपिताः ।

## (4) मौद्गलवेदव्यासाचार्यकृता तन्त्रदीपिका (1700 A.D.)

मुद्गलतीर्थाचार्यसूनुर्वेदव्यासाचार्यः अस्याः व्याख्यायाः निबद्धा । व्याख्येयं संक्षिप्ताऽपि अपूर्वविषयगर्भिता शोभते । मुद्गलतीर्थाचार्याः श्रीमदुत्तरादि- मठाधीशानां श्रीमत्सत्यपूर्णतीर्थानां (1700-1726 A.D.) सम्प्रतिपन्नाः श्रीमठीयास्थानविद्वांसः समासन्निति विज्ञायते । प्रसन्नवेङ्कटदासार्यैः (1680-1752) स्तुताः मुद्गलाचार्याः एत एव वा भिन्ना वा इति निर्णेतुं न प्रभवामि । एतेषां जीवनोदन्तादिविषये न किमपि वक्तुं समर्थः, विशेषानुपलम्भात् ।

एवं चत्वारोऽत्र ग्रन्थाः मुद्रापिताः । व्याख्यात्रयसंशोधने महान् श्रमः स्वीकृतः । अल्पीयसी बुद्धिः, अनन्ता चाज्ञता । तथाऽपि गुर्वनुग्रहेण यथामति पाठशोधः कृतः । तत्र तत्रोपयुक्ता टिप्पणी च समायोजिता । हंसक्षीरन्यायेन सुधियः मामनुगृह्णन्तु इति सम्प्रार्थये ।

## मातृकास्वरूपविवरणम् (Description of Manuscripts)

| ग्रन्थनाम | लिपिः | पूर्णम् | अक्षराणि | पङ्क्तयः | परिमाणम् |
|---|---|---|---|---|---|
| 1) सदाचारस्मृतिः | दे | पूर्णम् | 50 | 15 | 30 x 10 |
| 2) सदाचारस्मृतिः | दे | पूर्णम् | 46 | 18 | 28 x 11 |
| 3) सदाचारस्मृतिः C 694 | दे | पूर्णम् | 43 | 10 | 21 x 10 |
| 4) सदाचारस्मृतिः | दे | पूर्णम् | | | |

| ग्रन्थनाम | लिपिः | पूर्णम् | अक्षराणि | पङ्क्तयः | परिमाणम् |
|---|---|---|---|---|---|
| 1) आह्निककौस्तुभः | दे | पूर्णम् | 47 | 16 | 29 x 11 |
| 2) आह्निककौस्तुभः | दे | पूर्णम् | 50 | 17 | 26 x 10 |
| 3) आह्निककौस्तुभः | दे | पूर्णम् | 47 | 16 | 23 x 16 |
| 4) प्रकाशिका C 2062 | दे | अपूर्णम् | 60 | 15 | 30 x 10 |
| 5) प्रकाशिका | दे | अपूर्णम् | 66 | 16 | 26 x 14 |
| 6) तन्त्रदीपिका | दे | अपूर्णम् | 59 | 17 | 24 x 18 |
| 7) तन्त्रदीपिका | दे | अपूर्णम् | 56 | 18 | 24 x 18 |

| संज्ञा | उपलब्धिस्थानम् |
|---|---|
| क | पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठः, वेङ्गळूरु. |
| ख | विद्यावाचस्पति प्रो.प्रभञ्जनाचार्यः, वेङ्गळूरु. |
| ग | प्राच्यविद्यासंशोधनालयः, मैसूरु विश्वविद्यानिलयः, मैसूरु. |
| हृ.पा. | विद्यारत्नाकर वन्नञ्जे गोविन्दाचार्यैः संशोधितः हृषीकेशतीर्थीयपाठः |

| संज्ञा | उपलब्धिस्थानम् |
|---|---|
| क | विद्यावाचस्पति प्रो.प्रभञ्जनाचार्यः, वेङ्गळूरु. |
| ख | प्राच्यविद्यासंशोधनालयः, मैसूरु विश्वविद्यानिलयः, मैसूरु. |
| ग | पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठः, वेङ्गळूरु. |
| क | प्राच्यविद्यासंशोधनालयः, मैसूरु विश्वविद्यानिलयः, मैसूरु. |
| ख | राजा, पवमानाचार्यः, मन्त्रालयः. |
| क | पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठः, वेङ्गळूरु. |
| क | विद्यावाचस्पति प्रो.प्रभञ्जनाचार्यः, जयतीर्थग्रन्थालयः, वेङ्गळूरु. |

## कृतज्ञतासमर्पणम्

स्वीयपूर्णप्रज्ञविद्यापीठीयप्राच्यविद्यासंशोधनालयात् मूलमातृका - प्रदानेनानुगृहीतवद्भ्यः सकलशास्त्रविचक्षणेभ्यः जनतायामपि जनार्दनपूजकेभ्यः प्रतिभा-वाक्यार्थपाटव-परमकारुण्याद्यनेकगुणगणमण्डितेभ्यः परमपूजनीयेभ्यः ममाध्यात्मविद्योपदेशकेभ्यः श्रीपेजावरमठीय श्रीविश्वेशतीर्थस्वामिपादेभ्यः नमांसि भूयांसि समर्पये । तेषां कृपालेशत एवायं ग्रन्थः यथामति समशोधीति सविनयं विद्वत्सु निवेदये ।

अस्य ग्रन्थस्य मुद्रणार्थं समग्रमूल्यप्रदानेन मयि श्रीमच्चरणाः वात्सल्यातिशयं अनुग्रहविशेषं च कृतवन्तः । प्राचीनाचार्यसुकृतविशेषात्, विद्वद्वरेण्याराधितकमनीयचरणानां महातपस्विनां कारुण्यौदार्यादि - सकलसद्गुणभूषितानां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां चरणरजोगोगिष्वयमन्यतमो धन्यधन्य इति स्मारं स्मारं तेषामनुग्रहं भक्त्यतिशयेन संस्मरन् प्रणतिततिभिरेव केवलं प्रीणये ।

तथैव मातृकाप्रदानेन प्रोत्साहितवद्भ्यः वेङ्गलूरुविश्वविद्यानिलयसंस्कृत -विभागीयभूतपूर्वप्राध्यापकेभ्यः नितान्ताध्ययन-ग्रन्थलेखन-पाण्डित्यपूर्णप्रवचना -दिना भारते अन्यत्र च सुप्रथितेभ्यः के. टि. पाण्डुरङ्गिमहाभागेभ्योऽपि प्रणतयो विज्ञाप्यन्ते ।

एवमेव मातृकाप्रदानेन प्रोत्साहकेभ्यः 'पण्डितरत्नम्' 'वेदान्तभूषणम्' 'विद्यावाचस्पतिः' इत्याद्युपाधिविभूषितेभ्यः पाठ-प्रवचन-ग्रन्थनिर्माणादिना विद्वन्मान्येभ्यः, सदापि मदपेक्षितापूर्वमूलमातृकाप्रदानेन, मयि वात्सल्यातिशयं प्रदर्शितवद्भ्यः प्रो. प्रभञ्जनाचार्यमहाभागेभ्योऽपि प्रणतयो निवेद्यन्ते ।

विद्वांसः राजा पवमानाचार्याः संशोधनार्थं मूलमातृकां प्रदायोपकृतवन्तः । विद्वद्वर्येभ्यः अनेकग्रन्थसम्पादनप्रकाशनादिना विद्वन्मान्येभ्यः तेभ्योऽपि प्रणतीस्समर्पये ।

संशोधनकर्मणि प्रीत्यतिशयेन प्रोत्साहं कृतवद्भ्यः निर्देशकस्थान-मलङ्कृतवद्भ्यः नैकशास्त्रविचक्षणेभ्यः डा. के. वि. रमेशमहोदयेभ्योऽपि सादरं नतयोऽर्थ्यन्ते ।

एवमेव संशोधनकार्यमवलोक्य आनन्दमनुभवद्भ्यः 'पण्डितरत्नम्' 'वेदान्तभूषणम्' 'विद्यावाचस्पतिः' इत्याद्युपाधिविभूषितेभ्यः उपनिर्देशकेभ्यः आर्. जि. माळगि एम्. ए. महोदयेभ्योऽपि लब्धं हार्दं प्रोत्साहं स्मरामि । तेभ्योऽपि प्रणतयो विज्ञाप्यन्ते ।

'गच्छतः स्खलनं क्वापि' इत्यादि न्यायेन विद्यमानदोषान्निरूप्य 'हंसक्षीर' न्यायेन गुणावलोकनदीक्षाणां विद्वद्वरेण्यानां सर्वेषामपि करकमलयोः सविनयमिदमुपायनीक्रियते । नमो महद्भ्यः ।

विक्रमसंवत्सरग्य वैशाखकृष्णद्वादशी
29-05-2000

इति सज्जनविधेयः
आनन्दतीर्थ वि. नागसम्पिगे एम्. ए.
न्याय-वेदान्तविद्वान्
संशोधकः
प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यालयः, मैसूरु

# समग्रमूल्यप्रदानेनानुग्राहकाणां उडुपि पेजावरमठाधीशानां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां करनलिनयोः कार्तज्ञ्याविष्करणपूर्वकं समर्प्यते ग्रन्थचतुष्टयम्

## विश्वेशतीर्थश्रीमच्चरणानां पावनचरितम्

श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां पूर्वाश्रमनामधेयं 'वेङ्कटराम' इति । कमलानारायणौ च पितरौ । जन्मभूमिः, रजतपीठ (उडुपि) क्षेत्रात् नातिदूरे विद्यमानः रामकुञ्जनामको ग्रामः । गर्भाष्टम एवोपनयनसंस्कारः (1938) श्रीमतां अदूपणे मुहूर्ते समपद्यत । ततः हम्पिमहाक्षेत्रे श्रीमदाञ्जनेयस्वामिसंनिधौ अष्टमे वयसि तुर्याश्रमस्वीकारः । 'विश्वेशतीर्थ' इत्यन्वर्थनामकरणं श्रीमद्विश्वमान्यतीर्थैर्दीक्षाप्रदातृभिः ।

## पेजावरमठः

मुख्यप्राणावतारभूतैः श्रीमदानन्दतीर्थभगवत्पादाचार्यैः श्रीकृष्णार्चा - समाराधानाय संस्थापितेषु अष्टमठेषु अन्यतमो मठः पेजावरमठः । भगवत्पादाचार्य शिष्यप्रवराः श्रीमदधोक्षजतीर्था अस्य मठस्यादिगुरवः । यदीयभागवत् -समग्रव्याख्यानमुपजीव्य श्रीमत्सुधीन्द्रतीर्थ-यादवार्य-सत्यधर्मतीर्थ श्रीनिवासतीर्थ -प्रभृतयो विद्वद्वर्याराधितकमनीयचरणा भागवतव्याख्यामकार्षुः, यदीयव्याख्या च भगवत्पादाचार्याशयविशेषाविष्करणपटीयसी दुर्वादविद्रावणवरीयसी सकलसुजनमान्या तादृशापूर्वव्याख्याप्रणेतारः श्रीमद्विजयध्वजभट्टारका अस्मिन्नेव मठे व्यराजन्त । एवमेव ऐतरेयभाष्यव्याख्यातारः विश्वेश्वरतीर्थाः, सुमध्वविजयव्याख्यातारः विश्वपतितीर्थाः नैकशास्त्रप्रवीणा इममेव पीठमलञ्चक्रुः । श्रीमदानन्दतीर्थीयदिव्यपरम्पराप्रवर्तके प्रवर्धकेऽस्मिन् मठेऽधुना सर्वज्ञपीठमलङ्कुर्वाणाः श्रीमद्विश्वेशतीर्थश्रीमच्चरणाः सकलविद्याविशारदाः सर्वत्र समदृष्टयः वैराग्यतपोमूर्तयः ।

विद्याभ्यासः

प्रातः स्मरणीयाः न्याय-वेदान्त-मीमांसा-व्याकरणादिशास्त्रपारवारपारीणाः फलिमारु-भण्डारकेरि - उभयमठाधीशाः श्रीमद्विद्यामान्यतीर्थश्रीमच्चरणाः एतेषां विद्यागुरवः । पूर्वपञ्चवादा उत्तरपञ्चवादाश्च न्यायशास्त्रे, द्वैतवेदान्ते च श्रीमन्न्यायसुधादिप्रबन्धा उपदिष्टाः श्रीमच्चरणैः । पेंजावरस्वामिपादानां पाण्डित्य-विनयादिसद्गुणपूर्णता श्रीमद्विद्यामान्यतीर्थश्रीमच्चरणैरेवमुपवर्णिता-

"जन्मान्तरसुकृतेन भगवदनुग्रहेण च सकृन्निगदमात्रेण सर्वोऽप्यर्थः असाधारणप्रतिभया बुद्ध्यारूढः कृतः, श्रीमद्विश्वेशतीर्थश्रीमच्चरणैः । तेषां विनय-वैराग्य-कारुण्य-वैदुष्य-वाक्यार्थपाटव-देवस्वभावाद्यवलोक्य नितान्तं हृष्टाः वयम् । अच्युतप्रेक्षाचार्याणां पूर्णप्रज्ञाचार्या यथा शिष्यास्तथैव विश्वेशतीर्था अपि अस्माकं कीर्तिप्रवर्धकाः शिष्यप्रवराः । अस्मदुपदिष्टा विद्या, वस्तुस्वभावसामर्थ्यात् भगवदनुग्रहेण महता प्रयत्नेनासाधारणया च प्रतिभया विश्वेशतीर्थश्रीमच्चरणैः प्रवर्धिता ।"

गुरुचरणैः फलिमारुभण्डारकेरि - उभयमठाधीशैः श्रीमद्विद्यामान्यतीर्थ श्रीमच्चरणैरेव विश्वेशतीर्थश्रीमच्चरणा वात्सल्यातिशयेन सत्कृताः संस्तुताश्च। पेजावरस्वामिपादेषु परिदृश्यमाना गुरुभक्तिः-विशिष्टयोग्यता-दैवी प्रतिभा-चारित्रशुद्धिश्च सिद्धिप्रदायिकेत्यत्र न काऽपि विप्रतिपत्तिः ।

विद्वन्मान्याः विश्वेशतीर्थाः

(1) अध्ययनकाल एव, तर्ककेसरीत्याद्युपाधिविभूषितानां तिरुवादि विजयीन्द्राचार्याणां श्रीपादानां च ईक्षत्यधिकरणे, ब्रह्मणः शब्दलक्ष्यत्वपक्ष इव वाच्यत्वपक्षेऽप्यनवस्था दुर्वारेति वाक्यार्थविनोदः प्रावर्तत । श्रीमच्चरणैरनधीता अपि उद्ग्रन्थस्था विषयाः प्रतिभयानूदिताः । विजयीन्द्राचार्याश्च नितान्तं हृष्टाः श्रीमच्चरणानामसाधारणप्रतिभां वैदुष्यं च प्रशशंसुः ।

(2) महामहोपाध्यायानां शतभूपणी - अनन्तकृष्णशास्त्रिणां श्रीमच्चरणानां च 'अद्वैते जीवन्मुक्तिः' इति विषये 'अद्वैते विशिष्टैक्यमङ्गीकृतं न वा' इत्यत्र च वाक्यार्थः प्रावर्तत । तदा श्रीमदनन्तकृष्णशास्त्रिणः विश्वेशतीर्थश्रीमच्चरणानां प्रखरपाण्डित्येन मूकीभूताः विस्मिताश्च श्रीमच्चरणानां वैदुष्यं विद्वत्सभायामेव संस्तुत्य, मदरास्नगरे प्रचलितायां अद्वैतशास्त्रविद्वद्गोष्ठ्यां विश्वेशतीर्थश्रीमच्चरणानाहूय तत्रापि, श्रीमच्चरणानाम् अद्वैतसिद्धि-गौडव्रह्मानन्दीयाद्यद्वैतग्रन्थोपस्थितिं वाक्यार्थपाटवं चानुभूय गुणलुब्धा अद्वैततत्त्वसुधानामके प्रवन्धे श्रीमच्चरणान् एवं स्तुतवन्तः -

एतन्निवन्धलेखने प्रथमप्रोत्साहका विद्यारसिकाः सततं द्वैताद्वैत-विचारविनिमयैकदृष्टय उदारस्वभावाः श्री भण्डारकेरिपूज्यपादाः, द्वैतसिद्धान्त -समुन्नतिप्रकारनिर्णयैकदृष्टयः द्वैताद्वैतविचारविनिमयेनैव कालं यापयन्तः, भगवन्मध्वाचार्यावतारस्थानोडुपिक्षेत्रभूषणमधिकरण-वादप्रस्थानेषु द्वैतसिद्धान्त -प्रतिष्ठास्थानन्यायसुधा-तात्पर्यचन्द्रिका-न्यायामृत-तरङ्गिण्यद्वैतसिद्धि-लघुचन्द्रिका -द्यद्वैतनिवन्धचर्चयैव स्वजीवनयात्रां निर्वहन्तः, श्रीपेजावरमठाधिपाः श्रीमद्विश्वेश -तीर्थश्रीमच्चरणाः न कदापि विस्मरणमर्हन्ति ।

(3) पूनाविश्वविद्यानिलये दत्तो वामनपोद्दारनामकेन कुलपतिना समाहूताः श्रीचरणाः, तत्र विद्वद्गोष्ठ्यां भागं स्वीकृत्य 'घटो नीलघट' इत्यत्र शाव्दवोधनिर्वाहाय लक्षणे निरवच्छिन्नप्रकारतानिवेशने 'नीलो नीलः' इत्यत्रापि शाव्दवोधः स्यादिति न्यायशास्त्रे, 'मुक्त्यर्थं भगवत्प्रसादोऽप्यावश्यकः' इति वेदान्तशास्त्रवाक्यार्थे च अपूर्वकोटिक्रमप्रक्रियाविशेपनिरूपणादिना विद्वज्जनसमाराधिताः प्राकाशन्त । तत्र विद्वत्सभायां, 'वाचस्पतिरयं कर्मन्दिवृन्दाराधितकमनीयचरणः व्रतिकुलकुलपतिः' इति स्वामिपादान् संस्तूय प्रदत्ता सम्मानपत्रिका अद्यापि श्रीमठे विराजते ।

(4) तथैव अविमुक्तक्षेत्रे वारणास्यां महामहोपाध्यायराजराजेश्वरशास्त्रि -महाभागनामाध्यक्ष्ये प्रवर्तितायां विद्वद्गोष्ठ्याम् आहूताः, ईक्षतिनये,

कृतितादात्म्यरूपकर्तृत्वस्य प्रकृत्यामपह्नोतुमशक्यत्वेन अद्वैतनये साङ्ख्यनिराकारणं नैव सङ्घटत इति पूर्वपक्षमुपस्थाप्योत्तरमलभमानाः राजराजेश्वरशास्त्रिप्रभृतिभिः विद्वन्मूर्धन्यैः संस्तुताः, सम्मानपत्रप्रदानेन विद्वत्समाजेन समभिनन्दिता राराज्यन्ते ।

(5) देहलीपत्तने षष्ट्युत्तर एकोनविंशतिशततमे क्रैस्तवत्सरे (1960) विश्वकल्याणयज्ञमहोत्सवे प्रवर्तितायां विद्वद्गोष्ठ्यां काशीस्थैः पट्टाभिरामचन्द्रशास्त्रिभिः पञ्चलक्षणीमाथुरीटिप्पण्यां 'घटभिन्नं तादात्म्येन घटत्वात्' इत्यत्र प्रतियोगितायां स्वनिष्ठत्वनिवेशनेनैवाव्याप्तिपरिहारे तादात्म्यसम्बन्धानवच्छिन्नत्वनिवेशनं व्यर्थमित्याक्षेपः कृतः । तदा दाक्षिणात्या औत्तराश्च विद्वांसः मूकीभूताः । स्तब्धायां सभायां श्रीमद्विश्वेशतीर्थश्रीमच्चरणाः असाधारणप्रतिभया, न स्वनिष्ठत्वनिवेशनेनैवाव्याप्तिपरिहारः शक्यते कर्तुमतः प्रतियोगितायां तादात्म्यसम्बन्धानवच्छिन्नत्वं निवेशितमिति प्रत्यपादयन् । स्वामिचरणानां लोकोत्तरप्रतिभां न्यायशास्त्रपरिणतिं च समवलोक्य मूकविस्मिताः प्रत्युत्तरदानासमर्था रामचन्द्रशास्त्रिणः साष्टाङ्गप्रणतिपूर्वकं श्रीमच्चरणकृपादृष्टिमाशंसन्तः स्वामिपादानां वैदुष्यानुवर्णनेन रसनां सार्थकीकृतवन्तः ।

एवमत्र द्वित्रा एव विषया निरूपिताः । **'श्लाघाकम्पनमेकमेव शिरसः श्रीव्यासयोगीशितुः मेरूणां शतमर्हति क्षितितले विद्यांसु विद्यावताम्'** इति सोमनाथेन यथा श्रीमद्व्यासतीर्था उपवर्णिताः, तथैव श्रीमद्विश्वेशतीर्थश्रीमच्चरणा अपि विश्वविद्वदाराध्या विद्वत्पक्षपातिनश्चेति निश्चप्रचम् ।

## विद्यानिलयसंस्थापनम्

त्रयोविंश एव वयसि श्रीमच्चरणाः भारतीयतत्त्वशास्त्राध्यापनाय विशेषतः द्वैतवेदान्ताध्ययनाय च 'पूर्णप्रज्ञविद्यापीठ' नामकं विद्यालयं स्थापितवन्तः । द्विशताधिकाः छात्राः इयता कालेन तत्र वेद-वेदान्तादिशास्त्राण्यधीत्य देशेऽस्मिन्

तत्रतत्र पाठप्रवचन-ग्रन्थप्रकाशन-समाजसेवादिकार्यैः प्रथिताः ।

### अपूर्वग्रन्थानुवाद-प्रकाशनम्

पूर्णप्रज्ञविद्यापीटप्राङ्गणे प्राच्यविद्यासंशोधनालयोऽपि अमुद्रितग्रन्थ - संशोधनप्रकाशनार्थं स्थापितः । पूर्णप्रज्ञविद्यापीठ-शोधसंस्थयोः सकाशात् अशीत्यधिकाः काव्य-वेदान्तादिशास्त्रनिबन्धाः, कर्णाटक - आङ्ग्लभाषानुवादाश्च मुद्रापिताः । स्वयं श्रीमच्चरणा एव तत्त्वनिर्णय-न्यायसुधादिशास्त्रग्रन्थसारं कर्णाटकभाषायामनूद्य ज्ञानप्रदानेन सज्जनाननुगृहीतवन्तः । द्वाविमौ विद्यालयौ भारतदेशेऽन्यत्र च विख्यातौ ।

### जनताजनार्दनाराधकाः

सज्जनस्य हृदयं नवनीतं यद् वदन्ति विबुधास्तदलीकम् ।
अन्यदेहविलसत्परितापात् सज्जनो द्रवति नो नवनीतम् ॥

इति सुभाषितोक्तदिशा साधुस्वभावाः श्रीमच्चरणाः परेषां क्लेशानवलोक्य खिन्नस्वान्ताः, परोपकारार्थं वैद्यालय-गोशाला-गृहनिर्माण-अन्नदानादिना भगवत्सेवां कृतवन्तः, कुर्वन्ति च ।

(1) 1975 तमे वर्षे गुल्वर्गानगरे अनावृष्ट्या ततान् जनान् पशूंश्च विलोक्य दयार्द्रहृदयाः श्रीमच्चरणाः, अन्नदानादिना सकलमानवान् गोग्रामप्रदानेन पशूंश्च पोषितवन्तः । चिंचोळि-रोण-बागलकोट् इत्यादिग्रामेषु अद्यापि श्रीमच्चरणस्थापिताः गोशालाः विराजन्ते ।

(2) 1987 तमे वर्षे आन्ध्रप्रदेशे चण्डमारुतेन भग्नमेकं हंसलदीविनामकं ग्रामं दृष्ट्वा, तत्रत्यानां वर्णावराणाम् उपजीवनार्थं द्विशतगृहनिर्माणेन तान् पोषितवन्तः । एवमेव लातूरुनामकग्रामेऽपि अशीत्यधिकगृहनिर्माणेन तत्रत्यानां जनानां जीविकामनुगृहीतवन्तः ।

(3) बेङ्गळूरु - उडुपि - बागलकोट - मडिकेरि इत्यादिपत्तनेषु उचितवैद्यकीयकेन्द्रस्थापनेन निर्धनानां आरोग्याभिवृद्ध्यर्थं योजना स्वामिपादैः कृता । यत्राद्यापि सहस्राधिकाः जनाः सुखेनौषधादिस्वीकारेण प्राप्तदेहदाढ्याः कृतज्ञतया स्वामिपादान् स्मरन्ति ।

एवं सर्वेषां तत्त्वज्ञानप्रदान - ग्रन्थप्रकाशन - अन्नदान - वैद्यकीयसौलभ्य प्रदानेनानुग्राहकाणां मम विद्यागुरूणां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां पादनलिनयोः साष्टाङ्गप्रणतिततयः समर्प्यन्ते । ग्रन्थचतुष्टयमुद्राणाय समग्रमूल्यप्रदानेन वात्सल्यातिशयं मयि प्रकटीकृतवतां गुरुचरणानामुपकृतिं सर्वदा स्मरन्, तेषां करनलिनयोरिमानि ग्रन्थरत्नानि समर्पयामि ।

विक्रमसंवत्सरस्य वैशाखकृष्णद्वादशी
29-05-2000

इति सज्जनविधेयः
**आनन्दतीर्थ वि. नागसम्पिगे एम्. ए.**
**न्याय-वेदान्तविद्वान्**
**संशोधकः**
**प्राच्यविद्यासंशोधनालयः**
**मैसूरुविश्वविद्यानिलयः, मैसूरु**

# विषयानुक्रमणिका

श्रीमद्धनुमद्भीममध्वान्तर्गतश्रीरामकृष्ण
वेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ।।

## श्रीमदानन्दतीर्थभगवत्पादाचार्य

## प्रणीता

# सदाचारस्मृतिः

यस्मिन् सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
[1]निराशीर्निर्म्ममो याति परं जयति सोऽच्युतः ।।१।।

स्मृत्वा [2]विष्णुं समुत्थाय कृतशौचो यथाविधि ।
धौतदन्तः समाचम्य स्नानं कुर्याद् विधानतः ।।२।।

उद्धृतेति मृदाऽऽलिप्य द्विषडष्टषडक्षरैः ।
त्रिर्निमज्याप्यसूक्तेन प्रोक्षयित्वा [3]पुनस्ततः ।
मृदाऽऽलिप्य [4]निमज्य [5]त्रिस्त्रिर्जपेदघमर्षणम् ।।३।।

स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम् ।
यतश्वासो [6]निमज्याप्सु प्रणवेनोत्थितस्ततः ।
सिञ्चेत् पुरुषसूक्तेन स्वदेहस्थं [7]हरिं स्मरन् ।।४।।

वसित्वा वास आचम्य प्रोक्ष्याऽऽचम्य च [8]मन्त्रतः ।
गायत्र्या चाञ्जलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ।।५।।

मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् ।
तर्पयित्वा निपीड्याथ वासो [9]विस्तृत्य चाञ्जसा ।।६।।

---

१ निराशी निर्ममो - क   २ हरिम् इति - ह ती पा
३ पुनस्तथा - ह ती पा   ४ विमज्य - ख
५ द्विजपिदमघर्षणम् - ख   ६ निमग्नोऽप्सु - ह ती पा
[illegible]

अर्कमण्डलगं [1]विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।।७।।

आसूर्यदर्शनात् तिष्ठेत् ततस्तूपविशेत वा ।
पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम् ।
[2]उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् ।।८।।

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् [3]मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।।९।।

[4]गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।
[5]एवं सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद् हरिम् ।।१०।।

[6]ध्यानप्रवचनाभ्यां च [7]यथायोग्यमुपासनम् ।
धर्मेणेज्यासाधनानि साधयित्वा विधानतः ।।११।।

वैश्वदेवं वलिं चैव [8]कुर्यान्नित्यं तदर्पणम् ।
इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् प्रियान् [9]प्राणान् परस्मै सन्निवेदयेत्
।।१२।।

---

१ देवं, - ख

२ सायं तु - क

३ वदरकु - ख

४ गायत्र्या त्रिगुणं - ग

५ स्मृत्वा सर्वोत्तमं विष्णुं स्वाध्यायेनार्चयेद्धरिम् - ह ती पा

६ ध्यानप्रवचनाभ्यां वा - ह ती पा

७ यथायोग्यमुपास्य तम् - ह ती पा

८ कार्यं नित्यं - ह ती पा ९ प्राणान् यत् परस्मै निवेदयेत् - ह ती पा

भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः ।
भुञ्जीत हृद्गतं विष्णुं [1]स्मरंस्तद्गतमानसः ।
आचम्य मूलमन्त्रेण कोष्ठं [2]स्वमभिमन्त्रयेत् ।।१३।।

वेदशास्त्रविनोदेन प्रीणयन् पुरुषोत्तमम् ।
अहःशेषं नयेत् सन्ध्यामुपासीताऽथ पूर्ववत् ।।१४।।

यामात्परत एवाथ स्वपेद् [3]ध्यायन् जनार्दनम् ।
[4]अन्तराले ततो वुध्वा स्मरेत वहुशो हरिम् ।।१५।।

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुसृत[5]स्वभावम् ।
[6]करोति यद्यत् सकलं परस्मै
नारायणायेति समर्पयेत्तत् ।।१६।।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।१७।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।।१८।।

यस्मात् [7]क्षरमतीतोऽहमक्षरादपि चोत्तमः ।

---

१ स्मरंस्तद्योगमानसः - ह ती पा
२ समभिमन्त्रयेत् - क
३ ध्यात्वा - ह ती पा
४ अन्तराले ततोद्बुद्धः - ह ती पा
अन्तराले ततो बुद्धः - क. ग
५ स्वभावः - ह ती पा ६ करोमि - ख
७ क्षरमतीतोऽसावक्षराच्चोत्तमो हरिः । अतो हि लोके वेदे च प्रथितः पुरुषोत्तमः ।।
यस्तमेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति तं सर्वभावेन सर्वदा ।।
इति गुह्यतमं शास्त्रमिदं तेनोक्तमेव च ।
एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च नित्यदा ।। - ह ती पा

अतोऽस्मि लोके [1]वेदे च प्रथितः पुरुषोत्तमः ।।१९।।

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ।।२०।।

इति गुह्यतमं शास्त्रम् इदमुक्तं मयानघ ।
एतद् बुध्वा बुद्धिमान् स्यात् [2]कृतकृत्यश्च भारत ।।२१।।

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा [3]मामाश्रितो नित्यं [4]नाहं कञ्चिदुपाश्रितः ।।२२।।

[5]ये मे मतमिदं नित्यमनुतिष्ठन्ति [6]मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।।२३।।

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति [7]मे मतम् ।
सर्वज्ञानविमूढांस्तान् [8]विद्धि नष्टानचेतसः ।।२४।।

[9]द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुरः ।।२५।।

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युः एतयोरेव किङ्कराः ।।२६।।

---

१ वेदोऽपि - क

२ कृतकृत्यो हि - ख

३ तमाश्रितो - ह ती पा

४ न हरिः किञ्चिदाश्रितः - ह ती पा    नाहं किञ्चिदुपाश्रितः - ख ग

५ ये तन्मतमिदं - ह ती पा

६ सर्वदा - ह ती पा

७ तन्मतम् - ह ती पा    मन्मतम् - क

८ वियान्नष्टानचेतसः - क - ह ती पा

९ द्वावेव सर्गौ - ह ती पा

धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।
पापं भवति धर्मोऽपि यो न [1]भक्तैः कृतो हरे ।।२७।।

[2]मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
नित्यं भवेच्च [3]मन्निष्ठो बुभूषुः पुरुषस्तथा ।।२८।।

[4]एष नित्यः सदाचारो गृहिणो वनिनस्तथा ।
वैश्वदेवं बलिं दन्तधावनं चाप्यृते वटोः ।।२९।।

एवमेव यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं [5]विष्णोरेव च तर्पणम् ।।३०।।

विशेषो निष्क्रिययते[6]रजलाञ्जलिता तथा ।
तर्पणं तु हरेरेव हरेरन्यस्य चोदितम् ।
समिद्धोमो वटोश्चैव स्मृत्वा विष्णुं हुताशने ।।३१।।

सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा ।
रमा ब्रह्मादयस्तस्य परिवारत एव तु ।।३२।।

कविं पुराणमनुशासितारम्
अणोरणीयांस [7]मनुस्मरेद् यः ।
सर्वस्य धातारमचिन्त्यरूप -
मादित्यवर्णं तमसः परस्तात् ।।३३।।

---

१ भक्तै रमेशितुः - ह ती पा

२ तन्मना भव तद्भक्तस्तद्याजी तन्नमस्क्रियः - ह ती पा

३ तन्निष्ठो बुभूषुः पुरुषस्ततः - ह ती पा

४ एष नित्यसमाचारः - ह ती पा एवं नित्यः सदाचारो - क

५ विष्णोरेव तु - क ग

६ रजलाञ्जलिना तदा - ग

वेदोहमेतं पुरुषं महान्तम्
आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि [1]विचित्य धीरो
नामानि कृत्वा अभिवदन् यदास्ते ।।३४।।

धाता पुरस्ताद् यमुदाजहार
[2]शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ।।३५।।

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ।।३६।।

अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोपरहितः प्रीयतां पुरुषोत्तमः ।।३७।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता
सदाचारस्मृतिः समाप्ता

---

१ विचिन्त्य - घ
२ शक्रस्य विद्वान् - ग

श्रीमद्धनुमद्भीममध्वान्तर्गतश्रीरामकृष्ण
वेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्य
प्रणीता

# स दा चा र स्मृ तिः

## व्याख्यात्रयसमलङ्कृता

*( सर्वकर्मसमर्पणरहस्यज्ञ एव संसारान्मुक्तो भवति )*

यस्मिन् सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्म्ममो याति परं जयति सोऽच्युतः ॥१॥

*१. श्रीश्रीनिवासतीर्थविरचितः आह्निककौस्तुभः :-*

व्यासं मारमणं नत्वा गुरून्[1] परगुरूनपि ।
व्याख्यां करिष्ये प्रमितां सदाचारस्मृतेरहम् ॥१॥
सदाचारस्मृतिव्याख्यारूपेणाह्निककौस्तुभः ।
विरच्यते स्वधीशुद्ध्यै श्रीनिवासाख्यसूरिणा ॥२॥

अथ कलियुगावतीर्णदानवप्रसञ्जितदुर्मतध्वान्तनिरासायातिविशद - [2]ज्ञानालोकप्रवर्तनाय च साक्षात् मुख्यवायुरेव भुवि [3]गृहीतमनुष्यविग्रहः श्रीमदानन्दतीर्थाचार्यसूर्यः सर्वकर्मसु भगवदर्पणसहकृतताविधये सदाचार - स्मृत्याख्यग्रन्थं चकार ।

*( वेदतन्त्रोदितकर्माण्यवश्यमनुष्ठेयानि )*

---

१. श्चान्य. क. गुरुंश्चोच्च. ख.　　३. गूढतामनुष्य. ख.
२. ज्ञानावलोक. ख.

ननु तर्हि 'प्रक्षानलाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'इति न्यायेन कर्माण्येव मा कुर्युः दूरे भगवदर्पणमिति चेत् , " कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः "(ईश-२)

"सन्ध्योपास्त्यादिकर्माणि वेदतन्त्रोदितानि मे ।
पूजान्तैः कल्पयेत् सम्यक् सङ्कल्पः कर्मपावनः ।।"

(भाग.11.27.11.)

इति [1]श्रृति एकादशस्कन्धोक्तस्मृतिभ्यां कर्मविधानात् तदनुष्टान - मावश्यकम् । अनुष्टानं च तत्स्वरूपावगतिं विना न सम्भवतीति तदर्थं सङ्क्षेपेण कर्माणि निरूपयितुं स्वयं निष्प्रत्यूहोऽपि स्वभावादेव [2]कृतं निरन्तरायपरिसमाप्त्याद्यर्थं करणीयं मङ्गलं शिष्यान् ग्राहयितुं [3]विषयादिचतुष्टयांश्च सूचयन् ग्रन्थादौ निवध्नाति - यस्मिन्निति ।

आत्मा-जीवः, तमधिकृत्य नियामकतया वर्तमानो हरिः अध्यात्मम् । तस्मिन् चेतः ज्ञानम् । 'चिती संज्ञाने' इति धातोः । तेन अध्यात्मचेतसा। सर्वाधिके परमात्मनि चेतसा मनसेति वा । यस्मिन् विष्णौ सर्वाणि - नित्यनैमित्तिकानि च कर्माणि निष्कामतया अनुष्ठितानि, सन्न्यस्य - भगवानेव करोतीति समर्प्य । निराशीः - त्यक्तफलेच्छुः निर्ममः - ममत्वापरपर्यायेण अहङ्करोमीति मनोदोषेण विधुरः परं - स्वयोग्यं पूर्णज्ञानं, परमात्मानं च याति, स अच्युतः - देशकालगुणैः च्युतिरहितः हरिः जयति उत्कृष्टो वर्तते । अभि [4]भवति च शत्रूनिति [5]शेषः ।

*( अनुवन्धचतुष्टयोपपादनम् )*

ननु या इष्टा अधिकृता विशिष्टा सैव नम्या । इत्यतः 'इष्टो नो रमापतिः' 'एकान्तानां न कस्यचिदर्थे नारायणो देवः' इत्यादिभिरिष्टत्वं सिद्धवत्कृत्य अधिकृतत्वविशिष्टत्वे उपपादयितुं - 'यस्मिन् सन्न्यस्य, [6]परम्' इति चोक्तम् । अत्र भगवत्सम्वन्धिनां कर्मणां फलान्वयित्वोक्त्या यत्सम्वन्धेन

---

१. श्रुतिस्मृतिभ्यां . क. २. कृतनिरन्तराय. क.
३. विषयादि. ख. ग. ४. भ शत्रू. क. अविभति. ग.
५. शेषो वा. क. ६. पारम्. ख.

कर्मणामधिकृतत्वं तस्यैव मुख्यतः अधिकृतत्वमुक्तं भवति । परमिति सर्वोत्तमत्वाख्यं विशिष्टत्वं च । तथा च प्रारीप्सितग्रन्थे विष्ण्वर्पणयुतकर्माणि विषयः । [1]पूर्णज्ञानमवान्तरफलं मोक्षः परमप्रयोजनम् निर्ममः अधिकारी इति ज्ञेयम् ।

तथा हि श्रुतिः कर्मणां कर्तव्यतामाह - "सोममिन्मा सुन्वन्तो [2]याचता वसु" इति । अस्यार्थः वैकुण्टस्थहरेर्वाक्यमेतत् । 'हे लोकाः मामुद्दिश्य सोमं सुन्वन्त एव सोमोपलक्षितानि यागादीनि कर्माणि कुर्वन्त एव मां वसु याचत ' इति । अत्र कर्मणि कृते सति भगवान् फलं ददातीति गम्यते । मोक्षधर्मे च -

"तैरिष्टः पञ्चकालज्ञैः [3]हरिरेकान्तिभिर्नरैः ।
भक्त्या परमया युक्तैर्मनोवाक् कर्मभिः सदा" ।। इति

*(पञ्चकालविचारः)*

पञ्चकालास्तूक्ताः पञ्चरात्रागमे -

'रामाभिगमनं पूर्वमुपादानमतः परम् ।
इज्या स्वाध्याय[4]कालौ च योगकालस्तथैव च ।।' इति

हे रामेति सम्बोधनम् । पञ्चकालस्त्वित्थम् । अहो रात्रिश्च समाने । [5]सार्धसप्तघटिकात्मकरात्रिचतुर्थभागस्य मध्ये पूर्वाः सार्धचतस्रो घटिकाः योगकालः । रात्रिशेषस्य अरुणोदयाख्याः तिस्रो घटिकाः अह्नः आद्यप्रहरश्च अभिगमनकालः । तत्र शौचादि देवपूजान्तं कर्म कार्यम् ।

शिष्टप्रहराः त्रयः - उपादानेज्यास्वाध्यायानां कालाः । तेषु मध्याह्न सन्ध्यान्तं [6]कृतिः । गोग्रासः भोजनानि, इतिहासप्रभृतिभिः वेदार्थावधारणम्, सायं सन्ध्यान्तमित्येतानि क्रमात्कार्याणि ।

---

१. पूर्वज्ञान. क.

२. याचका. ख.

३. हरेरेका. क. ग.

४. कौलीने. ख.

५. सार्धसप्तघटिकार्ध. क.　६. वृत्ति. क. ग.

## २. नृसिंहाचार्यविरचिता
## भावप्रकाशिका

प्रणम्य श्रीपतिं मध्वं सत्यनूत्नयतीन् गुरून् ।
सदाचारस्मृतेर्व्याख्यां करिष्येऽहं यथामति ।।

इह खलु संसारसमुद्रे निमग्नानां भगवति भक्तिमुत्पादयितुं विष्णुभक्तिपूर्वकं भगवत् [1]स्मरणयुक्तकर्मणां भगवत्प्रीतिरूपमहाफलप्रदत्वं विधातुं सदाचारस्मृतिसंज्ञं धर्मशास्त्रं कर्तुं भगवानाचार्यः अन्तरायविधुरोऽपि शिष्यान् ग्राहयितुं मङ्गलमाचरति - यस्मिन्निति । सः सकलवेदप्रतिपाद्यः अच्युतः, देशतः कालतो गुणतश्च च्युतिरहितः नारायणो जयति । [2]सर्वोत्कृष्टो वर्तते ।

कथंभूतः याति? यस्मिन् विष्णौ, सर्वाणि कर्माणि सन्न्यस्य ।

नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथा ।।
[3]तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
[4]कर्मन्यासो हरावेव विष्णोः प्रीतिकरः सदा" ।।

इति गीतातात्पर्यानुसारेण समर्प्य परमात्मानं याति । प्राप्नोति ।

केन? अध्यात्मचेतसा । [5]अध्यात्मनि अधिकात्मनि सर्वोत्तम इति यावत् । चेतः अन्तःकरणं तेन । कथंभूतः अधिकारी? निराशीः [6]कृतकर्मफलेच्छारहितः। निर्ममः - इदं मदीयमिति स्वातन्त्र्यबुद्धिरहितः ।

## ३. मुद्गलवेदव्यासाचार्यविरचिता
## तन्त्रदीपिका

सर्वदाऽभिरतिर्मेऽस्तु श्रीकृष्णचरणद्वये ।
सर्वमङ्गलसम्पत्तिं यं नत्वा प्रापिरे परे ।।१।।
श्रीमदानन्दतीर्थार्यभगवत्पादसेवनम् ।

---

१. स्मरणकर्मणां. क.
२. सर्वोत्कर्षेण. ख.
३. तद्भक्तिस्सफलं. क.
४. कर्मव्यासो . क.
५. अध्यात्मम् . क.
६. कृतफलेच्छा. ख.

इहामुत्र च सर्वत्र घटतामनिशं मयि ।।२।।
श्रीमध्वमततत्त्वज्ञा विना यदवलम्वनम् ।
नैव स्युस्तमहं मूर्ध्ना [1]जयतीर्थमुनिं भजे ।।३।।
श्रीमध्वमततत्त्वज्ञचूडामणिमहर्निशम् ।
हृदा मुद्गलतीर्थार्यतातपादं नमाम्यहम् ।।४।।

अथ परमकारुणिको भगवानानन्दतीर्थो मुनिः यावदन्यूनानतिगहनमकरणे प्रत्यवायजनकं सर्वाश्रमसाधारणं तावदिदं सत्कर्मेति प्रतिपादयन् स्वयमनन्तरायोऽपि शिष्यशिक्षार्थं ग्रन्थादौ महामङ्गलरूपं भगवन्तं स्तौति - यस्मिन्निति । यस्मिन् परमात्मनि। सर्वाणि - अतीतानागतवर्तमानानि । कर्माणि - पुण्यपापानि । सन्न्यस्य समर्प्य ।

*(पुण्यकर्म-पापकर्मसमर्पणेऽवश्यमनुसन्धेयरहस्याविष्करणम्)*

पुण्यकर्मणां भगवत्सु अर्पणं '[2]स्वामिनः फलश्रुतेरित्यात्रेयः'

---

१. जयतीर्थमहं. क.

२. स्वामिनः फलश्रुतेरित्यात्रेयः 3. 4. 44.

यत्सात्विकैर्विहितमनुष्ठीयते तस्य यथायोग्यं फलमप्याप्यते । तत्र देवानामेव प्रधानकर्तृत्वं फलभोक्तृत्वं चानुसन्धेयम् । लोकेऽपि भृत्यैः कर्म कारयन् स्वाम्येव विशिष्टं कर्मफलमुपभुङ्क्ते। अस्वामित्वादप्रधानकर्तृत्वाच्च भृत्यस्याल्पमेव फलम् । तदुक्तं - माध्यन्दिनायनश्रुतौ - "यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति । यदु किञ्चेमाः प्रजाः विजानते देवा एव तद्विजानते । देवानां ह्येतद् भवति । स्वामी हि फलमश्नुते । नास्वामी कर्म कुर्वाणः।" इति

प्रकृते सर्वकर्मसमर्पणविषये इदमनुसन्धेयम् - शारीराः किलास्मिन् शरीरे पुण्यं वाऽथ पापकर्माचरन्ति । तत्र रथाकर्षणक्रियायां यथा वहूनां कर्तृत्वं प्रमितं, तद्वत् पुण्यकर्माचरणे तत्वाभिमानिनां देवानां, पापकर्माचरणे च दैत्यानां प्रधानकर्तृत्वं शास्त्रोक्तमवश्यं विचिन्तनीयम्। अस्मासु स्थित्वा पुण्यकर्मकर्तृणां कारयितृणां च देवानामेव प्रधानफलभोक्तृत्वाननुसन्धाने अस्माकं चौर्यदोषः कृतघ्नताख्यदोषश्च समापतति । तस्मात् पुण्यकर्माचरणे अनुग्राहकाणां देवानां कर्तृत्वानुसन्धानपुरस्सरं तेषां महत्फलं यातु इति विचिन्त्य विम्वभूते हरौ पुण्यकर्मसमर्पणं कार्यम्।

एवमेव पापकर्माचारणेऽनादिकर्मादिकमनुसृत्य दैत्यानां प्रचोदनया मयासाधु कृतम् ।हरे! यद् ज्ञानतोऽज्ञानतो वाऽसाधु कृतं तदहमेवासाध्विति निवेदयामि । 'इतः परमीदृशं कर्म मया मा कारये'ति विज्ञापनपुरस्सरं पापकर्म समर्पयामि । अत्राऽपि मदीयदेहे असन्नियोक्तृणां दैत्यानां हरिद्वेषिणामेव महत्पापफलं प्रयात्विति सम्प्रार्थये ।

एतादृशवुद्ध्यैव सर्वकर्मसमर्पणम् शास्त्रोक्तम् । विस्तृतोऽयमर्थः विष्णुरहस्ये हरिकथामृतसारग्रन्थे चेति नेह तन्यते ।

इत्यादिप्रमाणसिद्धम् । पापकर्माणां भगवत्समर्पणं नाम तद्द्वेषिदैत्यानां मदीयपापफलं भवेदिति भगवत्प्रार्थनमेव । यदाहुराचार्याः - 'मदीयपापकर्माऽपि ते द्वेषिजनं प्रयातु ' इति । तथा 'सुखात्सुखतरं यान्तु सर्वे भीमार्जुनादयः। कष्टात् कष्टतरं यान्तु सर्वे दुर्योधनादयः ' [म.ता.11.19.] इति । अध्यात्मचेतसा - [1]सर्वमन्तःप्रेरकभगवदायत्तमिति तत्प्रवणमनसा। निराशीः - फलेच्छारहितः। निर्ममः - स्वस्मिन् मुख्यकर्तृत्वाभिमानरहितः । परं - श्रीब्रह्मादिभ्य उत्तमम्। याति - मुक्तो भवति । तथा च यस्मिन् सर्वाणि कर्माणि सन्न्यस्य मुक्तो भवति सोऽच्युतः जयति उत्कृष्टो वर्तत इत्यर्थः।

ननु नेदं मङ्गलं, स्वेष्टदेवतावन्दनाऽदर्शनात् इति चेन्न । मङ्गलं त्रिविधम् । 'आशीर्नमस्क्रिया वस्तुनिर्देशश्च' इति । एवं चाच्युतो जयतीति वस्तुनिर्देशात् मङ्गलमुपपन्नम् । 'अध्यात्मचेतसे'त्यनेन मनः प्रावण्यस्य सर्वाधिकारिसाधारण्यस्य [2]स्वप्रामाण्यमपि लभ्यते ।।१।।

*सदाचारस्मृतिः*

*( विष्णुस्मृतिविहीना चेत् क्रिया नैव फलप्रदा )*

स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि ।
धौतदन्तः समाचम्य स्नानं कुर्याद् विधानतः ।।२।।

*१. आह्निककौस्तुभः*

*(ब्राह्ममुहूर्तकार्यम्)*

ननु [3]येषु भगवदर्पणमितिकर्तव्यतारूपं, कानि तानि कर्माणीत्याकाङ्क्षायां तानि दर्शयितुं ब्राह्म[4]मुहूर्तकार्यं कर्म तावदाह - *स्मृत्वेति* । समुत्थाय विष्णुं स्मृत्वेत्यन्वयः । स्मृत्वेत्यनुवादबलात् विधिः कल्प्यते । समुत्थाय - निद्रातः सम्यक् प्रबुद्ध्य । विष्णुं स्वदेहे जागृदादिदातृतया विश्वादिरूपेण प्रविष्टं हरिं स्मरेत् इति । 'मुखं व्यादाय स्वपति' इत्यत्र 'सुप्त्वा मुखं व्यादत्त' इतिवत् ।

१. सर्वमन्तःकरण . क.
२. स्वप्रामाण्येऽपि. क.
३. येषां. ख.
४. मुहूर्तकर्म . क. ख.

यद्वा समुत्थानात् पूर्वम् अल्पबोधनकाले परवशोऽपि वारं वारं स्मृत्वा ततः शयानादुत्थाय गेहान्तर्वर्तीतरपदार्थज्ञानं यथा स्यात्तथा उत्थाय पुनः [1]गजेन्द्रमोक्षणपाठादिस्तोत्ररूपेण विष्णुं स्मृत्वा, ततो यथाविधि तत्परिवारत्वेन रमा-विरिञ्चादीन् स्वोत्तमान् गुरूंश्च [2]स्मृत्वा, ततः श्रोत्रियादीनवलोक्य, यथाविधि - विधिमनतिक्रम्य कृतशौच इत्यर्थः ।

*(ब्राह्मकालः)*

'रजनीप्रान्तयामार्धं ब्राह्मस्समय उच्यते' इति स्कान्दवचनात् रजन्या अन्त्तयामस्यार्धो भागः ब्राह्मसमयः । 'ब्राह्ममुहूर्त इति उषःकालस्य प्रसिद्धेश्च' इति छान्दोग्यभाष्यत उषःकालस्यैव [3]ब्राह्ममुहूर्तसंज्ञा ज्ञेया । तथा चोक्तं *वाराहे* तृतीयाध्याये -

"उषःकाले समुत्तिष्ठेत् सर्वदा वैष्णवो नरः ।
प्रक्षाल्य पाणी पादौ च तत आचम्य भक्तितः ।
सुखासीनः स्मरेन्नित्यं मदीयामिष्टदेवताम् " ।। इति

*(प्रातः पाठ्याः मन्त्राः)*

तत्र मन्त्रमाह व्यासः -

प्रातर्भजामि भवभीतिमहार्तिशान्त्यै
नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतवरवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ।।

ततः [4]'वन्दे विष्णुं नमामि' इत्यादिगुरुनमनं कुर्यात् । ततो धर्मादिकं

---

१. गजेन्द्ररूपेण विष्णुं . क.

२. नत्वा. क.

३. यदि प्रातः सार्धपञ्चवादने सूर्योदयो भविष्यति तर्हि, सार्धचतुर्थघण्टासमयः ब्राह्मकाल उच्यते।

४. अयमत्र श्लोकपाठः -

वन्दे विष्णुं नमामि श्रियमथ च भुवं ब्रह्म वायू च वन्दे ।
गायत्रीं भारतीं तामपि गरुडमनन्तं भजे रुद्रदेवम् ।।
देवीं वन्दे सुपर्णीमहिपतिदयितां वारुणीमप्युमां ताम् ।
इन्द्रादीन् काममुख्यानपि सकलसुरान् तद्गुरून् मद्गुरूंश्च ।। इति

चिन्तयेत् । 'ब्राह्मे मुहूर्ते 'चोत्थाय धर्ममर्थं च चिन्तयेत्' इति कूर्मपुराणोक्तेः ।

'त्रैलोक्यचैतन्यभवादिदेव
श्रीनाथ विष्णो भवदाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
सम्सारयात्रामनुवर्तयिष्ये ।।

स्वामी त्वं नृहरे तवानुचरणाः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोग[2]रचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिस्स्तोत्राणि सर्वा गिरो
यद्यत् कर्म करोमि तत्तदखिलं विष्णो तवाराधनम् ।।'

"संसारयात्रामनुवर्तमानस्त्वदाज्ञया श्रीनृहरेऽन्तरात्मन् ।
जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं च मे निवृत्तिः ।।
कृष्णेन देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।।"

इति स्मृत्वा, ततः [3]श्रोत्रियादिकमवलोकयेत् न तु पापिनम् ।

(*प्रातरवलोकनीयाः अनवलोकनीयाश्च*)

तदाह कात्यायनः -

'श्रोत्रियं सुभगां गां च गुरुमग्निचितं तथा ।
प्रातरुत्थाय यः पश्येत् स आपद्भ्यः प्रमुच्यते ।
पापिष्ठं दुर्भगं मत्तं [4]नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत् तत्कलेरुपक्षणम् ' ।। इति
नदीं वृषं धार्मिकं च मृदङ्गं दर्पणं मणिम् ।
गुरुमग्र्यं रविं पश्यन् न नश्येत् प्रातरेव हि ।। इति

(*शौचविधिः*)

शौचद्वैविध्यं तूक्तम् स्मृतौ -

---

१. चोद्धार्य. क. २. रचनं . ग.
३. श्रोत्रियादिकमिति ख. कोशे नास्ति । ४. नग्नमुत्कृत्तनासिकम् क.

शौचे यत्नं सदा कुर्यात् शौचमूलो यतो द्विजः ।
शौचाचारविहीनस्य समस्ताः निष्फलाः क्रियाः ।।
शौचं तु द्विविधं प्रोक्तं [1]वाह्यमान्तरमेव च ।
मृज्जलाभ्यां कृतं वाह्यं भावशुद्धिस्तथान्तरम् ।। इति

शौचप्रकारमाह मनुर्वशिष्टश्च -
'ततः प्रातः समुत्थाय कुर्याद् विण्मूत्रमेव च ।
ग्रामात् पदशतं गच्छेत् नगराच्च चतुर्गुणम् ।।
दिवा सन्ध्यासु कर्णस्थव्रह्मसूत्र उदङ्मुखः ।
कुर्यात् मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ।।
विदारयेत् तथा तत्तु कृम्यनुत्पत्तिहेतवे ।
गच्छेद् ग्रामाद् वहिः पश्चात् वाग्यतो नियतेन्द्रियः ।
नैर्ऋत्यां [2]पश्चिमेऽथो वा [3]शुचिदेशं विवर्जयेत् ।।
कृत्वा यज्ञोपवीतं तु पृष्ठतः कर्णलम्बितम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
कुर्यात् मूत्रपुरीषे च रात्रौ चेद् दक्षिणामुखः ।।' इति

अत्र दक्षिणकर्णस्थयज्ञोपवीतम् एकवस्त्रविषयम् । [4]कण्ठलम्वितत्वं द्विवस्त्रविषयमिति स्मार्ताः ।

उत्सर्गे वै पुरीषस्य मूत्रस्य च विसर्जने ।
[5]तिष्ठेत् नातिचिरं तत्र न च किञ्चिदुदीरयेत् ।।
इति विष्णुपुराणे।

मृत्तिकाशौचविषये शातातपः -
शुचिदेशात्तु सङ्ग्राह्याश्शर्कराश्मादिवर्जिताः ।
विप्रे गौरा मृदः प्रोक्ताः क्षत्रे रक्तास्तथोदिताः ।
वैश्यस्य हरितः प्रोक्ताः कृष्णाः स्त्रीशूद्रयोरपि ।।

---

१. वाह्याभ्यन्तरमेव च. क.
२. पश्चिमोऽथो वा. ग.
३. अशुचिदेशं. क. शुचिदेशविवर्जिते. ग.
४. कुण्डल. क.
५. तिष्ठेत नाविचरन्. ग.

यस्मिन् देशे तु यत्तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात् तथा शौचं विधीयते ।।
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं कुर्यात् शौचमतन्द्रितः ।।
लिङ्गशौचं पुरा कार्यं गुदशौचमतः परम् ।
आर्द्रामलकमात्रा हि मूत्रशौचे तु मृत्तिका ।
मूत्रात्तु द्विगुणं शुक्रे मैथुने त्रिगुणं स्मृतम् ।।
मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते ।
एकस्मिन् विंशतिर्हस्ते [1]द्वयोर्देयाश्चतुर्दश ।
तिस्रस्तु पादयोर्देयाः शौचकामस्य सर्वदा ।
शौचमेतद् गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद् वनस्थानां यतीनां च चतुर्गुणम् ।
[2]यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् ।
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ।
स्त्रीशूद्राणामशक्तानां वालानां नोपनीतिनाम् ।
गन्धलेपक्षयकरं शौचं कुर्यान्न सङ्ख्यया ।।
षड्वारं कुरुते मूत्रं त्रिवारं च पुरीषकम् ।
एतच्छौचविधिः पूर्वमत ऊर्ध्वं न दोषभाक् ।।

आपदि शौचमाह वृद्धपराशरः -

‘अरण्ये निर्जले रात्रौ चोरव्यालाकुले पथि ।
कृत्वा मूत्रपुरीषे च द्रव्यहस्तो न दुष्यति ।।’ इति

मृदादिकं हस्ते धारयित्वा न दुष्यतीत्यर्थः ।

*(दन्तधावनप्रकारः)*

[3]विहितकाष्ठादिना निर्मलीकृतदन्तः स्वविध्यनुसारात् आचम्य आचमनं कृत्वा। ‘विधानतः’ ल्यव्लोप [4]निमित्तपञ्चम्यन्तात् शव्दात् तसिल् । विधानमनुसृत्य स्नानं प्रवाहाद्यभिमुखः सन् गङ्गादिषु कुर्यादित्यन्वयः ।

---

१. द्वयोश्चैव चतुर्दशी. ग. ३. वितत काष्ठा. क. ग.
२. [illegible] क. [illegible] ग. ४. [illegible] क. ग.

दन्तधावनविधिरुक्तः आपस्तम्बेन -

पुरोदयाद् रवेरद्यात् नोदितेऽस्तमिते रवौ ।
दीक्षितो ब्रह्मचारी च यतिश्च विधवाङ्गना ।
नित्यमद्यात् दन्तकाष्ठं त्रिजन्मसु [1]विवर्जयेत् ।।

[2]त्रिजन्मसु - काष्टेषु । तदुक्तम् -

दन्तानां शोधनं कार्यं काष्ठैरुक्तैर्यथाविधि ।
कार्पासीं तुवरीं वेणुं तिन्त्रिणीं च विवर्जयेत् ।।
निषिद्धदिवसे कुर्याद् गण्डूषान् द्वादशैव तु ।
तृणपर्णैः सदा कुर्यात् अमाम् एकादशीं विना ।
तयोरपि च कर्तव्यं जम्बूप्लक्षरसालकैः ।
निषेधो दन्तकाष्ठस्य भोजनान्तेऽखिलस्य च ।
पत्रैर्वा द्वादशैर्दन्तान् गण्डूषैः शोधयेदपि ।। इति ।

द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रजातीनां नवषट् [3]चतुरङ्गुलम् ।
चतुरङ्गुलमात्रं तु नारीणामिति निश्चयः ।। इति ।
प्रक्षाल्य पादौ हस्तौ च मुखं चक्षुस्समाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः ।।

इति व्यासः ।

स्थूलकाष्ठं दन्तधावने शस्तम् -

'मध्याङ्गुलिसमं स्थूलं द्वादशाङ्गुलिसम्मितम् ।
सरलं दन्तकाष्ठं स्यात् तदग्रेण तु धावयेत् ।

---

१. न वर्जयेत्. क.

२. त्रिजन्मसु - जन्मजन्मसु क. त्रिजन्मसु काष्टेषु इति ख कोशे नास्ति
अत्रैते श्लोका क कोशे पठ्यन्ते - प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।
पौर्णिमायां सङ्क्रमे च श्राद्धे जन्मदिने तथा ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ।। इति



३. चतुरङ्गुलिम्. क.

सुसूक्ष्मं हीनदन्तस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ।
प्रतीचीं दक्षिणाशां च वर्जयेद्दन्तधावने ।
अङ्गार-[1]वालुका-पर्ण-तृण-वस्त्र-नखादिभिः ।
न कुर्याद्दन्तकाष्ठं च श्रीकामो दूषिते दिने ।
न कुर्याद्दन्तकाष्ठं च तैले शिरसि च स्थिते ।
प्राङ्मुखस्य धृतिस्सौख्यं शरीरारोग्यमेव च ।
दक्षिणेन [2]तथा कष्टं पश्चिमेन पराजयः ।
उत्तरेण गवां नाशस्त्रीणां परिजनस्य च ।
[3]पूर्वोत्तरे तु दिग्भागे सर्वान् कामानवाप्नुयात् ।'

इति च स्मृतिः ।

लक्ष्मीसंहितायां च -

'पतितान्त्यजपापण्डिशुनकांश्च रजस्वलाम् ।
भिषक्पातकिचाण्डालान् न प्रेक्षेद्दन्तधावने ।

*(दन्तधावने मन्त्रः)*

आयुर्बलं यशो वर्चः प्रजा पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ।

इति दन्तधावने मन्त्र उदितः ।

[4]'दन्तधावनमङ्गुल्या प्रत्यक्षं लवणेन च ।
मृत्तिकाभक्षणे चैव तुल्यं गोमांसभक्षणम् ।' इति ।

---

१. विकला. क.

२. वृथा ख.

३. पूर्वे विस्तर. क.

४. 'दन्तधावनमङ्गुल्या' इति निषेधस्तु अनामिकाङ्गुष्ठव्यतिरिक्तविषयम् । यदाह वृद्धगार्ग्यो

याज्ञवल्क्यश्च - इष्टका-लोष्ट-पाषाणैरितराङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकाङ्गुष्ठौ न कुर्याद्दन्तधावनम् । इति ।

यदुक्तं पैठीनसिना - 'तृणपर्णोदकेनाङ्गुल्या वा दन्तान् धावयेत् प्रदेशिनीवर्जम् ' इति ।
अत्र प्रदेशिनीग्रहणं निषिद्धाङ्गुल्युपलक्षणमित्यविरोधः ।

'पश्चाद् द्वादशगण्डूषैः विदध्यात् दन्तधावनम् ।
स्मृत्वोङ्कारं च गायत्रीं निवध्नीयात् शिखां ततः ।'

इति ।

शौनकः दन्तधावनोचितं कालमाह - 'दन्तधावने उदयकाले या [1]विद्धा तिथिः सा वर्ज्या।' तथा च स्कान्दे -

'अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ।' इति ।

(अथ गण्डूषविधिः)

कुर्याद् द्वादशगण्डूषान् पुरीषोत्सर्जने वुधः ।
मूत्रे चत्वारि गण्डूषान् भोजनान्ते तु षोडश ।
भक्ष्यभोज्यावसाने तु गण्डूषोऽष्टौ विधीयते ।
पुरतो देवता तिष्ठेद्दक्षिणे पितृदेवताः ।
गण्डूषक्षेपणं तस्माद् वामभागे विधीयते ।

(आचमनविधिः)

[2]आचमनं निमित्तपुरस्कारेणाह भरद्वाजः -

चाण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा दन्तोच्छिष्टे [3]तथानृते ।
आचमेदश्रुपाते वा लोहितस्य तथैव च ।
स्त्रीणामप्यात्मनः स्पर्शे नीवीं वा परिधाय च ।
आयतं सर्वतः कृत्वा गोकर्णाकृतिवत्करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
[4]मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं पिवेत् ।
माषमज्जनमात्रास्तु सङ्गृह्य त्रिरपः पिवेत् ।
अपवित्रकरः कश्चित् ब्राह्मणोऽप उपस्पृशेत् ।
अकृतं तस्य तत्सर्वं रुधिरेणाचमन्ति ते ।
[5]अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।

---

१. विद्धा इति क कोशे नास्ति ।

२. आचमने. क. ग.

३. तथावृते. ग.

४. मुक्तादेककनिष्ठेन. ख. ५. अन्तर्वाऽथ. क.

ब्राह्मेण विप्रस्तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
याम्यप्रत्यङ्मुखत्वेन कृतमाचमनं यदि ।
प्रायश्चित्तं तदा कुर्यात् स्नानमाचमनक्रमात् ।
ब्राह्मेण विप्रस्तीर्थेन [1]नित्यमाचमनं चरेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन । इति ।

ब्राह्मादितीर्थानां लक्षणं तर्पणप्रकरणे वक्ष्यामः । अङ्गुल्यग्रे देवतीर्थं, स्वल्पाङ्गुल्याः मूले कायं तीर्थमार्षम् । मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यम् । मूलेऽङ्गुष्ठे ब्राह्मं, तेन तीर्थं पिबेदिति । त्रैदशिकं - दैवम् । अत्र नित्यपदात् सर्वदा ब्राह्मेणैव । तस्य भागस्य व्रणाद्युपघाते त्वितराभ्यामिति व्यवस्थितो विकल्पः ।

*(आचमनापवादः)*

आचमननिषेधमाह बोधायनः -
'न वर्षधारास्वाचामेद् तथा च प्रदरोदके ।
आपो जग्ध्वौषधं पीत्वा कृत्वा ताम्बूलचर्वणम् ।
[2]पादक्षालनशेषाच्च नाचामेद् वारिणा द्विजः ।
शूद्राहृतैस्तु नाचामेत् एकपाण्याहृतैस्तथा ।
न [3]चैवाव्रतहस्तेन नापरित्यज्य हस्ततः ।
आपः करनखस्पृष्टास्समाचमति यो द्विजः ।
सुरां पिबति स व्यक्तां यमस्य वचनं तथा ।
सोपानत्को जलस्थो वा मुक्तकेशोऽथ वा पुनः ।
उष्णीषी वापि नाचामेद् वस्त्रेणावेष्ट्य वा शिरः ।' इति
क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।
[4]सद्य आचमनाशक्तौ अभावे सलिलस्य च ।
पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत् ।
प्रभासादीनि तीर्थानि गङ्गाद्यास्सरितस्तथा ।
आदित्या [5]वसवो रुद्रा वायुरग्निश्च धर्मराट् ।

---

१. स्नानमाचमनं. क.
२. पादप्रक्षालने शाच्च क.
३. चैवाव्रणहस्तेन. ग.
४. सन्ध्यामाचमना. ख.
५. वसवः साध्या क.

विप्रस्य दक्षिणे कर्णे निवसन्ति हि देवता ।

साङ्ख्यायनवचनं तु जलाभावे सन्ध्यायाः स्मरणवत् । कौरवयुद्धे द्रोणादीनां रजसा अर्घ्यदानमिव उदकाभावेनाचमनानानुकूलतायां कर्णं स्पृशेदिति गौणकल्प इति ज्ञेयम् ।

*(आचमनत्रैविध्यम्)*

अथ द्विराचमननिमित्तमाह व्यासः -

'दाने भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेत् जपहोमार्चनेष्वपि ।' इति ।

अत्राचमनं त्रिविधम् - [1]स्मार्तं, मन्त्राचमनापरपर्यायं श्रौतं, वैष्णवं चेति । 'त्रिराचमेत् द्विः परिमृज्य' इत्युक्तं ऋग्वेदाय नमः इत्याद्याकारं मन्त्राचमनम् ।

[2]स्मार्ताचमनलक्षणमाह भरद्वाजः -

'देव्याः पादैस्त्रिभिः पीत्वा [3]अब्लिङ्गैर्नवधा स्पृशेत् ।
पुनर्व्याहृतिगायत्र्या [4]शिरोमन्त्रैस्त्रिधा स्पृशेत् ।
एवं यः कुरुते विप्रो महापापैः प्रमुच्यते ।' इति ।

तत्प्रयोगस्तु - 'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ' इति त्रिराचम्य । 'आपो हिष्ठा मयो भुव' इति वामहस्त - प्रक्षालनम् । 'तान ऊर्जे दधातन' इत्यन्यकरप्रक्षालनम् । 'महेरणाय चक्षसे यो वश्शिवतमो रस' इत्याभ्यां कपोलौ । 'तस्य भाजयते हनः उशतीरिव मातरः ' इत्योष्ठौ। 'तस्मा अरङ्गमामव' इत्यञ्जलिम् । [5]'यस्य क्षयाय जिन्वथ ' इति पादौ । 'आपो जनयथा च न' इति शिरः । 'ओम् भूः' इति नासिकाग्रे । 'ओम् भुवः ओम् सुवः' नासिकादक्षिणवामभागयोः । 'ओम् महः ओम् जनः' इति नेत्रयोः। 'ओम् तपः ओम् सत्यम्' इति कर्णयोः । 'ओम् तत्सवितुर्वरेण्यम्' इति नाभौ। 'ओम् भर्गो देवस्य धीमहि' इति हृदये। 'धियो यो नः प्रचोदयात्' इति शिरसि। 'ओम् आपो ज्योतीरसोऽमृतं ब्रह्म

---

१. श्रौतं मान्त्रं त्रिराचमेत् द्विः परिमृज्येति श्रुत्युक्तं मात्रम् ।
ऋग्वेदाय नम इत्याकारकं मन्त्राचमनं वैष्णवं चेति ।। क.

२. श्रौताचमन लक्षणमाह. क.

३. [illegible] ४. शिरोमित्रैः क. ५. [illegible] क.

भूर्भुवः स्वरोम्' इत्याभ्यां भुजयोः । मध्ये मध्ये क्षालयेत् इति [1]चतुर्विंशतिस्थानेषु न्यस्याचमनं [2]स्मार्तम् ।

अथ श्रौताचमनं तूक्तम् - सिन्धुद्वीपे ।

त्रिश्चतुर्वारमाचामेद् वेदान् ध्यायन्ननुक्रमात् ।
प्रमृजेद् द्विरथर्वेण पुराणैश्चेतिहासकैः ।
मुखमङ्गुष्ठमूले च [3]पृथक् चाप उपस्पृशेत् ।
पाणिनाथोऽग्निमन्त्रेण अवमृज्याथ संस्पृशेत् ।
विप्रस्तु नेतराणां तु तन्मुखालम्बनं स्मृतम् ।
सूर्याय दक्षिणे नेत्रे वामे [4]सोमाय वै स्पृशेत् ।
पृथिव्यै पादयोर्जान्वोः अन्तरिक्षाय संस्पृशेत् ।
दिने दिने गुह्यके च विष्णवे हृदये तथा ।
शिवायेति शिरस्यन्ते हस्तं [5]प्रक्षालयेत्ततः ।
अङ्गुष्ठतर्जन्यग्राभ्यां नेत्रयोरुभयोः स्पृशेत् ।
अङ्गुष्ठमध्यमाभ्यां च नासां श्रवणयोस्ततः ।
अङ्गुष्ठनामिकाभ्यां च कनिष्ठाभ्यां च बाहुके ।
साङ्गुष्ठैरखिलैरेभिः स्थानेष्वन्येषु संस्पृशेत् ।
इदं श्रौताचमनं नाम सर्वार्थस्य प्रसाधकम् ॥ इति

अत्र यथासम्भवं योज्यम् । ऋग्योगस्तु - ऋग्वेदाय नमः । यजुर्वेदाय नमः । सामवेदाय नमः । इति पीत्वा, अथर्ववेदाय नमः, अग्नये नमः इति मुखं द्विरुन्मार्ज्य, विष्णवे नमः, सरस्वत्यै नम इत्योष्ठौ सङ्कुच्य, [6]ज्येष्ठाङ्गुलिमूलेन द्विः सम्मृज्य, प्राणाय नमः, वायवे नम इति नासिके, चन्द्राय नमः, भास्कराय नमः इति चक्षुषी । दिग्देवताभ्यो यमादिभ्यो नम इति प्रमृज्य । ब्रह्मणे नमः विष्णवे नम इति हस्ततलेन हृदयम् । इन्द्रायेति बाहू प्रोक्षयेत् । पृथिव्यै नम इति पादयोः । अन्तरिक्षाय नम इति जान्वोः, दिनेशाभ्यां नम इति गुह्यके, शिवाय नम इति शिरः सम्मार्जयेत् । मध्ये हस्तौ प्रक्षालयेदिति ।

---

१. चतुर्विंश क.
२. श्रौतम्. क.
३. पृथक् जाय. ख.
४. वामाय. ग.
५. प्रक्षालयेत्तदा. क.
६. ज्येष्ठेति ग कोशे नास्ति

*(वैष्णवाचमनस्य श्रैष्ठ्यनिदानम्)*

केशवाद्याचमनं वैष्णवाचमनम्। [1]अत्राशेषशिष्टपरिगृहीतत्वाद् वैष्णवाचमनस्यैवेतराभ्यां विशिष्टत्वं कूपोदकस्नानतो भागीरथीस्नानस्येव ततः सर्वकर्मसु प्रेक्षावद्भिः वैष्णवाचमनमेवानुष्ठेयम् ।

ननु [2]अनेक ऋषिविदिताचमनकर्मण [3]अनेकत्वाद् वैष्णवाचमनस्यैव ज्यायस्त्वं कथमिति चेत् उच्यते । विष्णुनामत्वादधिकफलत्वेन विशिष्टत्वमिति। तथापि कथमधिकफलत्वं ? 'ऋग्वेदाय नमः' इत्यादेरपि विष्णुनामत्वात् इति चेत्, मैवम् । अन्यत्रापि प्रसिद्धनामभ्यः तत्रैव प्रसिद्धानां विशिष्टत्वादिति ध्येयम् ।

ननु स्मार्तादिसंज्ञा किं निवन्धनेति चेत् वदामः । शिष्टैः स्मार्तादितया व्यवह्रियमाणत्वरूपाखण्डोपाधेरेव [4]तद्धेतुत्वात् ।एवमन्यदपि ।

ननु स्मृतिविहितं स्मार्तं श्रुतिविहितं श्रौतमिति किन्न स्यादिति चेत् न। [5]परस्परातिव्याप्तेः । सर्वस्यापि श्रुतिस्मृतिविहितत्वात्। आचाराच्च । 'स्मृतेश्च श्रुतिकल्पनम्' इति पूर्वमीमींसावार्तिकोक्तेः । मन्वादयोऽपि श्रुत्यर्थं स्मृत्वा स्मृतिं रचयन्तीति प्रसिद्धम् । केशवादिवैष्णवाचमनस्यापि वैय्याघ्रपादस्मृतिनिरूपितत्वेन स्मार्तत्वादिति ।

वैष्णवाचमनमाह वैय्याघ्रपादः -

केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ ।
द्वाभ्यामोष्ठौ च सम्मृज्य द्वाभ्यां सम्मार्जयेत् करम् ।।
एकेन वामं सम्प्रोक्ष्य पादावपि तथैकतः ।
[6]सम्प्रोक्ष्यैकेन मूर्धानं मुखं सङ्कर्षणादिभिः ।।
नासिके च तथा नेत्रे श्रोत्रे नाभिं तथा हृदि ।

---

१. इतः परं क कोशे त्रिराचमेत् द्विः परिमृज्येति श्रुत्युक्तं श्रौताचमनं ऋग्वेदस्य नम इत्याकारकं मन्त्राचमनम् च इत्यस्ति ।

२. एकऋषि. क.

३. एकत्वात्. ग.

४. स्मार्तवचनम्. कं. . . . . . . . . . . . ग.

५. परस्पराव्याप्तेः. ग.

६. सम्प्रोक्ष्य केन. क.

शिरो बाहू च क्रमशः स्पृशेद् द्वादशनामभिः ।।
श्रीपूर्वकं च नामादौ नमोऽन्तश्च ततः क्रमात् ।
वैष्णवाचमनं ह्येतत् स्वयं नारायणो भवेत् ।। इति

अत्र वैष्णवाचमने केशवादिकृष्णान्तानि चतुर्विंशतिनामानि [1]चतुर्थ्यन्तानि नमोन्तानि चोच्चार्याणीति स्मार्ताः । इदमाचमनं सर्वकर्माङ्गम् । यथाह *पुराणसारे* -

'या क्रियाः कुरुते मोहाद् अनाचम्यैव नास्तिकः ।
भवन्ति हि यतस्तस्य वृथा सर्वा न संशयः ' ।। इति

*(अथ स्नानम् अनेकविधम्)*

स्नानं च वहुविधमुक्तं वाराहे -

'मन्त्रस्नानं मलस्नानं ध्यानस्नानं च वारुणम् ।
पञ्चमं च जलस्नानमिति पञ्चविधं स्मृतम् ।।
नवद्वारमिदं देहं स्रवत्यहरहर्मलम् ।
तच्छुद्ध्यर्थं प्रकर्तव्यं [2]मलस्नानं दिने दिने ।।
प्रथमं त्रिर्निमज्याप्सु कराभ्यां शोधयेन्नरः ।
सर्वाङ्गाणि च त्रिः पश्चात् निमज्याचम्य भक्तितः ।।
मलस्नानमिदं प्रोक्तमावश्यकमिदं नृणाम् ।
अथ शीतजलाशक्तौ कुर्यादेवोष्णवारिणा ।।
शीतास्वप्सु निषिच्योष्णं वारि पश्चाच्च शीतलम् ।
तुलसीमृत्तिकायुक्तं गायत्र्या [3]ह्यभिमन्त्रितम् ।
जलं विधाय कुर्वीत यो ह्यशक्तो भवेद् द्विजः ।।
नास्त्युद्धृतजलस्नाने देवर्षिपितृतर्पणम् ।
अस्याप्यशक्तौ कर्तव्यं मन्त्रस्नानं दिने दिने ।।
सन्ध्योपासनकर्मादावधिकारस्य सिद्धये ।
[4]आर्द्रवस्त्रेण सम्मार्ज्य सर्वगात्रभवं मलम् ।
पूर्ववस्त्रं परित्यज्य धौतमन्यद् विधारयेत् ।

१. चतुर्थ्यन्तानि इति ग कोशे नास्ति ।
२. जलस्नानं. क. ग. ३. ह्यनिमन्त्रितम्. क. ४. आद्य. क. आज्य. ग.

आचम्य जलमादाय पात्रे वामकरेऽथवा ।
गायत्र्या वाऽथ मूलेन [1]त्रिवारमभिमन्त्रयेत् ।
तज्जलं प्रोक्षयेद् गात्रे दर्भैर्वा तुलसीदलैः ।
तर्जनीमध्यमाभ्यां वा त्र्यृचेनाब्दैवतेन वै ।
भूमौ शिरसि चाकाशे आकाशे भुवि मस्तके ।
मस्तके च तथाकाशे भूमौ च नवधा क्षिपेत् ।
अब्दैवतः स्मृतो मन्त्र आपो हिष्ठेति वै त्र्यृचः ।
त्रिरावृत्य क्षिपेत्तोयं प्रत्यृचं नवधा द्विजः ।
आकाशं हृदयं प्रोक्तं भूमिः पादाविति स्मृतम् ।
तत [2]आचम्य विधिवत् कुर्यात् सन्ध्यादिकर्म च ।
यदाप्येतन्न शक्नोति वृद्धो वाप्यथ [3]वाऽऽतुरः ।
शयानोऽपि प्रकुर्वीत ध्यानस्नानमतन्द्रितः ।
सर्वलक्षणसंयुक्तां मन्मूर्तिं स्वेष्टदेवताम् ॥
मस्तकोपरि तां ध्यायेत् तत्पादाभ्यां विनिस्सृताम् ।
व्रह्मणा [4]क्षाल्यमानां च गङ्गां त्रिपथगामिनीम् ।
धृतां शिवेन शिरसा ततोऽपि निस्सृतां वहिः ।
निपतन्तीं स्वके मूर्ध्नि प्लावयन्तीं मुहुर्मुहुः ।
सर्वाङ्गानि ततः सम्यक् आचम्य शुचितां व्रजेत् ।
स्नातोऽपि [5]विधिवच्छक्तो वारुणेन जलेन वा ।
मन्त्रस्नानं तथा ध्यानस्नानं कुर्याच्च नित्यदा ।
जलस्नानमथो वक्ष्ये सिद्ध्यर्थं सर्वकर्मणाम् ॥ इति
भूमिस्थमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम् ।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ।
तीर्थतोयं ततः पुण्यं ततो गाङ्गं तु सर्वतः ॥ इति

मार्कण्डेयोक्तेः तारतम्ये स्थितेऽपि यत्र यदस्ति तत्र तदेवोत्तममुदकमिति ज्ञेयम् ।

प्रवाहाभिमुखो मज्जेत् यत्रापः प्रवहन्ति वै ।

---

१. द्विवारम् . क.　　२. आरभ्य. ग.　　३. वादरः क.
४. क्षाल्यमानाभ्यां क. ग.　　५. विधिवच्छक्तस्य क.

स्थावरेषु च [1]सर्वेषु आदित्याभिमुखस्तथा ।।

इति जावालिः ।

नैमित्तिकस्नानमाह मनुः -

दिवाकीर्त्यमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ।।

दिवाकीर्त्यः चण्डालः। उदक्या रजस्वला ।

वर्षाकाले त्रिदिनं [2]सरोवरादिस्नाननिषेधमाह -

' नभोनभस्वतोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ।
[3]वर्षाकालभवं वारि प्रत्यग्रमशुचि त्र्यहम् ।' इति ।

महानदीं विहायान्यासु न स्नायात् । तत्रापि त्रिदिनं [4]परित्यज्य स्नायादित्यर्थः ।

स्नाने विशेषमाह शातातपः -

निर्दशात्मकवस्त्रेण न स्नायाद् कौपीनकादृते ।

कौपीनं निर्दशात्मकमपि ग्राह्यमित्यर्थः ।

न पारक्येन नार्द्रेण न सूच्या ग्रथितेन च ।
रात्रौ स्नानं न कुर्वीत होमदानं च रात्रिषु ।
नैमित्तिकं [5]तु कुर्वीत [6]स्नानं होमं च रात्रिषु ।
पुत्रजन्मनि यत् स्नानं यज्ञेसङ्क्रमणं रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ।। २ ।।

इति ।

*२. प्रकाशिका*

ननु कीदृशं कर्म यद्भगवति समर्प्य परं प्राप्नोतीत्यत आह - *स्मृत्वेति*।

---

१. गर्तेषु. ग. २. सर्वस्नान. क

३. वर्षकालभवे. क.

४. परित्यज्य इति ख ग कोशयोः नास्ति ।

५. न ग. ६. दानं ग.

'समुत्थाय' ब्राह्ममुहूर्त इति शेषः । तदनन्तरं विष्णुं स्मृत्वेत्यन्वयः ।

"विष्णुस्मृतिविहीना तु पूजा स्यादासुरी मता ।
गृह्णन्ति देवता नैतां ततः स्याद् देशविप्लवः ।
व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिस्सदा ।
विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।
भक्तस्याप्यन्यदेवेषु तस्माद् ध्येयो हरिः सदा ।।"

( तन्त्रसारसङ्ग्रह अ.३. श्लोक.१२५-६ ) इत्युक्तेः ।

*(अनुबन्धचतुष्टयनिरूपणम्)*

[1]ननु केऽत्र विषयप्रयोजनसम्बन्धाधिकारिणः? श्रूयताम् । कर्मणां भगवत्समर्पणं विषयः। परस्य प्राप्तिः मुख्यं प्रयोजनम् । स्वर्गाद्यवान्तरप्रयोजनम्। विष्णुभक्तियुक्तत्वे सत्यध्ययनादिमानधिकारी । यथायोग्यं सम्बन्धः ।

विष्णुरपि ब्राह्ममुहूर्ते प्रबोधमाह - "रात्रेस्तु [2]पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते । जागरस्तत्र कर्तव्यो देव [3]सम्माननं हि तत्।" इति । कूर्मपुराणेऽपि - ' ब्राह्मे मुहूर्ते [4]चोत्थाय धर्ममर्थं च चिन्तयेत् ' इति । अत्र यामशब्देन यामार्धो ग्राह्यः । तदुक्तं - 'रजनीप्रान्तयामार्धो ब्राह्मः समय उच्यते ' इति ।

शौचविधिमाह - *कृतशौचो यथाविधि* इति । शास्त्रोक्तविधिं अनतिक्रम्य कृतः शौचो येन स भवेदित्यर्थः । अत्र शौचस्य [5]कर्तृविशेषणत्वेऽपि लोहितोष्णीशवद् विधानं सम्भवति । विधिप्रकारस्तु -

त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ।।

इति सङ्कल्प्य,

भूमिदेवि [6]महाभागे विष्णोः प्रियतमे सदा ।
त्वां नत्वा विचरिष्यामि विष्णुयात्रा प्रवर्तते ।।

---

१. इदं वाक्यं क कोशे न पठ्यते ।
२. प्राक्तनो . ख.
३. सम्भावनं क.
४. चोत्थाप्य
५. कर्तृशेषत्वेऽपि क.
६. महामाये क.

समुद्रवसने देवि [1]पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

इति भूमिं प्रार्थ्य मूत्रोत्सर्गे कर्तव्ये । अत्र [2]मूत्रोत्सर्गमनुक्त्वा शौचकथनं तु कस्यचिद् वद्धोदरस्य प्रातर्विसर्गाभावेऽपि यथाविधि शौचः कर्तव्य इति सूचनार्थम् ।

सोपानस्कः सजलकमण्डलः नैऋतीं दिशं गत्वा शुचिदेशस्थां शर्कराश्मादिरहितां आखूत्कर्षवल्मीकपांसुकर्मवर्जितां मृदमुद्धृत्य तां मृदं कमण्डलुं च शुचिदेशे निधाय तृणादिभिर्भूमिमाच्छाद्य दिशोऽनवलोकयन् उत्सर्गं कुर्यात् । तदुक्तं -

"उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
वाचं नियम्य यत्नेन [3]निष्ठीवेत् श्वासवर्जितः ।
कुर्यान्मूत्रपुरीषं तु शुचौ देशे [4]समाहितः ।" इति ।

"ग्रामात्क्रमशतं गच्छेत् नगराच्च चतुर्गुणम् " इति । 'क्रमशतं' पादविक्षेपशतमित्यर्थः ।

याज्ञवल्क्यः -

'दिवासन्ध्यासु कर्णस्थ ब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ।'

यमः -

'प्रत्यङ्मुखस्तु [5]पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ।'

अस्य सूर्याभिमुखो न कुर्यादित्यत्र तात्पर्यम् । अत एव *देवलोऽपि* -

[6]सदैवोदङ्मुखः प्राह्णः सायाह्ने दक्षिणामुखः ।
विण्मूत्रमाचरेन्नित्यं सन्ध्यासु परिवर्जयेत् ॥

सन्ध्यासु वर्जनं [7](निरुद्धेतरविषयम्) । 'न वेगान् धारयेत् नोपरुद्धः क्रियां कुर्यात् ' इति मनुस्मरणात् । यच्च मनुनोक्तं -

---

१. पर्वरत्नसुमण्डिते ख.
२. मूत्रोत्सर्गमनुक्तत्वा इति क. कोशे नास्ति ।
३. निष्ठीवनोच्छ्वासवर्जितः क
४. समासतः . ख.
५. पूर्वाग्रे क.
६. सादिवो ख.
७. निरुद्धतविपयम् क. ख. ग.

[1]छायायामन्धकारे वा रात्रावहनि च द्विजः ।
[2]यथासुखमुखः कुर्याद् प्राणवाधाभयेषु च ।। इति

तन्त्रीहारान्धकारादि दिङ्मोहविषयम्। कर्णे ब्रह्मसूत्रविधानं तु एकवस्त्रविषयम्।

"कृत्वा यज्ञोपवीतं तु पृष्ठतः कर्णलम्बितम् ।
विण्मूत्रं तु गृही कुर्याद् यद्वा कर्णे समाहितः ।।"

इति विकल्पात् । तथा च *साङ्ख्यायनगृह्ये* - 'यदेकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात्' इति। *हारीतः* -

"उच्चारे मैथुने चैव प्रभाते दन्तधावने ।
स्नाने भोजनकाले तु वहुमौनं समाचरेत् ।।"

उच्चारे पुरीषोत्सर्गे । विष्णुपुराणे -

'दूरादावसथान्मूत्रं पुरीषं च विसर्जयेत् ।
पादावसेचनोच्छिष्टं न क्षिपेत् स्वगृहाङ्गणे ।।
न कालकूपे न जले न वीथ्यां न च पर्वते ।
न जीर्णदेवायतने न वल्मीके न शाड्वले ।।
[3]न ससत्वेषु गर्तेषु न गच्छन्न पथि स्थितः ।
न [4]नदीतीरमासाद्य गोष्ठे भस्मनि गोमये ।।'

'न च पर्वतमस्तके' इति पाठे पूर्वं पर्वतग्रहणेनैव तन्मस्तकसिद्धौ पुनर्ग्रहणाद् दोषाधिक्यं द्योत्यते । *इत्युत्सर्गविधिः* ।

शौचे यत्नः सदा कार्यः [5]शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता [6]निष्फलाः क्रियाः ।।

याज्ञवल्क्यः -

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं [7]कुर्यादतन्द्रितः ।।

उद्धृतैरिति जलान्तर्निषेधः । गन्धलेपक्षयकरमिति सर्वषां साधारणम् । वक्ष्यमाणमृत्सङ्ख्यानियमस्तु अदृष्टार्थः ।

---

१. छागाया क. २. यथामुखसुखः ख.
३. न चत्वरेषु इति ख ४. नदीतीरजागारे क. ख.
५. शुचेर्मूलो क. ६. निर्गताः ख.
७. कुर्यादमन्त्रितः क.

*( मृत्तिकाऽहरणलेपनादिक्रमः)*

‘आहरेन्मृत्तिकां प्राज्ञः कूलात्ससिकतां [1]तथा।’ कूलग्रहणमनुपहतदेशोपलक्षणार्थम् ।‘ वापीकूपतटाकेषु नाहरेद् वाह्यतो मृदम् । आहरेज्जलमध्यात्तु [2]परतो मणिवन्धनात् ’। *शातातपः* - ‘शुचिदेशात्तु सङ्ग्राह्या शर्कराश्मादिवर्जिता। रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता’ । *कश्यपः* - ‘ विप्रैर्गोरा मृदः प्रोक्ताः क्षत्रे रक्तास्तथोदिताः । वैश्यस्य हरिताः प्रोक्ताः कृष्णा स्त्रीशूद्रयोस्तथा।’ *विष्णुपुराणे* - [3]‘वल्मीकमूपकोत्खातां मृदमन्तर्जलात्तथा । शौचावशिष्टां गेहाच्च मृदः शौचे विवर्जिताः।’ *विष्णुः* - ([4]अन्तः प्राण्युपपन्नां वल्मीकात् -) हलोत्खातां न चाहरेत् । *मनुः* -

आहृतामन्यशौचार्थं वालुकां पांसुरूपिणीम् ।
न मार्गान्न स्मशानाच्च नादद्यात् कुड्यतः क्वचित् ।।
तथा यस्मिन् देशे च यत्तोयं या च वै यत्र मृत्तिका ।
सैव तत्र प्रशस्ता स्यात् तया शौचं विधीयते ।।

*मृत्सङ्ख्यानियममाह दक्षः* - -

‘ एका लिङ्गे करे तिस्रः उभयोर्मृद्द्वयं स्मृतम् ।’

करे - सव्ये । एतच्च मूत्रशौचविषयम् ।

‘एका लिङ्गे करे [5]सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत् ।।’

इति शातातपस्मरणात् ।

अत्र मनूक्तो विशेषः -

‘एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोस्सप्त दातव्याः मृदः शुद्धिमभीप्सता ।।’ इति ।

---

१. तु या. ख.

२. पूरितो ख.

३. वाल्मीकि. क.

४. अन्तः प्राण्यां ख. अन्तः प्राण्यां ग. क.

५. तिस्रो क.

[1]एकत्र - करे सव्ये । यमदक्षौ -

द्वे लिङ्गे मृत्तिके देये गुदे पञ्च करे दश ।
[2] उभयोस्सप्त दातव्याः [3]------------------ ।। इति ।

शङ्खः -

"[4]मेहने मृत्तिकास्सप्त लिङ्गे द्वे परिकीर्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश ।। इति ।
तिस्रस्तु मृत्तिका देयाः कर्तुर्वै [5]नखशोधनम् ।
तिस्रस्तु पादयोर्ज्ञेयाः शौचकामस्य सर्वदा ।।
शौचमेतद् गृहस्थानां तथा गुरुनिवासिनाम् ।
द्विगुणं स्याद् वनस्थानां त्रिगुणं परिकीर्तितम् ।।
चतुर्गुणं यतीनां च मृत्तिकाशौचलक्षणम् ।
मृत्तिका तु समुद्दिष्टा [6]त्रिपर्वं पूर्यते यथा ।।' इति ।

अत्र मृत्तिकाधिक्यं वहुमूत्रपुरीषलेपशङ्कायां यदात्वेवमपि गन्धलेपक्षयो न भवति तदोक्त[7]सङ्ख्यातिक्रमणं कार्यम् । तथाह मनुः -

यावन्न यात्यमेध्याक्तो गन्धलेपश्च तत्कृतः ।
तावन्मृद्वारि वा देयं [8]सर्वासु द्रव्यशुद्धिषु ।। इति ।

हस्तशौचे तु हारीतो विशेषमाह - 'दश सव्ये [9]षट्पृष्ठे सप्तोभाभ्यां तिसृभिः पादौ प्रक्षालयेत्' इति । पृष्ठे - सव्यहस्तपश्चाद् भागे । लिङ्गशौचे तु प्रमाणमाह दक्षः - लिङ्गे तु मृत्समाख्याता त्रिपर्वं पूर्यते यथा इति ।

विट्शौचे तु मनुः -

[10] अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता ।।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् ।
न्यूनाधिक्यं न कर्तव्यं शौचे शुद्धिमभीप्सता ।

---

१.एकत्राकरे मध्ये. क.   २. उभयोसम ख.   ३. अत्र मातृकाद्वयेऽपि ग्रन्थपातः दृश्यते ।   ४. मेधेन. क.   ५. नराशो ख.
६. तिवर्गं ख. (अर्थः न ज्ञायते)   ७. सङ्ख्याक्रमणे. क.
८. सर्वासु द्रव्यशुद्धिः क.   ९. शते. ख.   १०. अर्धप्रसृत. क.

[1]प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ।

कथञ्चिदुद्धरणाशक्तौ आदित्यपुराणे -

अतिमात्रं जलं त्यक्त्वा [2]कुर्याच्छौचमनुद्धृतौ ।
तदर्धमातुरे प्रोक्तम् आतुरस्यार्धमध्वनि ।
स्त्रीशूद्रयोरर्धमात्रं शौचे प्रोक्तं मनीषिभिः ।।

यो विण्मूत्रोत्सर्जनाय उपविष्टः सन् न तत्करोति [3]तस्याप्यर्धशौचमाह वृद्धपराशरः -

उपविश्य तु विण्मूत्रं कर्तुं यस्तु न विन्दति ।
स कुर्यादर्धशौचं तु तस्य शौचस्य सर्वदा ।। इति

यत्र [4]सङ्ख्याविषमत्वेनार्धीकरणासम्भवः तत्र मृदर्धपरिमाणस्य ।

'आर्तः कुर्याद् यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ।
वालास्यानुपनीतस्य गन्धलेपक्षयावहम् ।'

वृद्धपराशरः -

अरण्ये निर्जले रात्रौ [5]चोरव्यालाकुले पथि ।
कृत्वा मूत्रपुरीषे च द्रव्यहस्तो न दुष्यति ।।

मृदादिहस्ते धारयित्वा न दुष्यतीत्यर्थः । अन्ये तु द्रव्यहस्तो न दुष्यतीत्यस्यान्यार्थं वर्णयन्ति । एवंविधस्थले [6]अदनीयं द्रव्यं हस्ते गृहीत्वा मूत्रपुरीषकरणेऽपि तद्द्रव्यं शुद्धमेवेति । तद् द्रव्यं हस्ते गृहीत्वा आचमने कृते शुद्धं भवतीत्यर्थः । भोजनकाले गुदप्रस्रावे विशेषमाह -

'भुञ्जानस्य तु विप्रस्य कदाचित् प्रस्रवेद् गुदम् ।
[7]उच्छिष्टमशुचित्वं च तस्य तौ च विधीयते ।
पूर्वं कृत्वा तु शौचं तु ततः पश्चादपःस्पृशेत् ।
ततः कृत्वोपवासं च पञ्चगव्येन शुद्ध्यति ।' इति ।

विप्रग्रहणमुपलक्षणार्थम् । शौचे हस्तनियममाह *देवलः* -

"[8]धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् ।'

---

१. प्रायश्चित्ते वियुज्येत ख. २. कुर्यात् शुचिमनिर्हदः क.
३. तस्याप्यर्धशौचमिति क कोशे नास्ति । ४. सङ्ख्याविपयत्वे क.
५. घोरव्यालाकुले क. ६. अदनीयं इंति ख कोशे नास्ति ।
७. उच्छिष्टत्वमशुचि क. ८. धर्मविद्वान् क्षणे क.

तथा च वामहस्तेन नाभेरूर्ध्वं न शोधयेत् ।

विण्मूत्रयोर्मिलितयोः शौचकरणे विट्शौचेनैवोभयसिद्धेः न मूत्रशौचस्य पृथक्प्रसक्तिः । *यमः* -

'मूत्रे त्रिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ।
मृदः पञ्चदशामेध्ये हस्तादीनां विशेषतः ।
एतदात्मीयमूत्रादिस्पर्शशौचमुदाहृतम् ।
परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा ।
चतुर्णामपि वर्णानां द्वात्रिंशन्मृत्तिकाः स्मृताः ।'

*व्याघ्रपादः* -

शौचं तु द्विविधं प्रोक्तं [1]वाह्यमभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम् ।
[2]गङ्गातोयेन कृत्स्नेन मृद्भारैश्चापि गोमयैः ।
आमृत्योश्चाचरन् शौचं भावदुष्टो न शुद्ध्यति ।

इति । *इति शौचविधिः* ।

दन्तधावनविधिमाह - *धौतदन्त* इति । धौतानि दन्तानि येन स तथोक्तः । ननु शौचानन्तरमाचमनस्य वक्तव्यत्वात् कथं दन्तधावनविधिरुच्यत इति चेन्न । [3]दन्तधावनानन्तरमपि आचमनस्य क्रियमाणत्वाभिप्रायेण क्रमोल्लङ्घनं साध्विति ।

*तत्रापस्तम्भः* -

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तदार्द्रकाष्टं शुष्कं वा भक्षयेद्दन्तधावनम् ।
[4]कटकक्षीरिवृक्षोत्थं पर्वार्धकृतकूर्चकम् ।
कनिष्ठिकाग्रवत् स्थूलं द्वादशाङ्गुलमव्रणम् ।

*व्यासोऽपि* -

प्रक्षाल्य हस्तौ पादौ च मुखं च सुमाहितः ।
दक्षिणं वाहुमुद्धृत्य कृत्वा [5]जान्वन्तरा ततः ।
तिक्तं कषायं कटुकं सुगन्धं कण्टकान्वितम् ॥

---

१. वाह्यमन्तरमन्तरा क. २. अङ्कतो येन ख.
३. दन्तधावनान्तरमपि इति क कोशे नास्ति ।
४. कण्टक क. ५. जान्वन्तरं गतः ख.

[1]क्षीरिणो वृक्षयुग्माच्च भक्षयेद् दन्तधावनम् ।

दन्तधावनं चाग्रेण कर्तव्यम् । तदुक्तं *कौर्मे* -

मध्याङ्गुलसमं स्थूलं द्वादशाङ्गुलसम्मितम् ।
सत्वचं दन्तकाष्टं स्याद् तदग्रेण तु धावयेत् ।

कात्यायनः -

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
[2]परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ।

मन्त्रश्च विष्णुनोक्तः -

आयुर्बलं यशो वर्चः [3]प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ।। इति ।

तत्परिमाणमाह विष्णुः -

द्वादशाङ्गुलकं विप्रे काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रजातीनां नव षट्चतुरङ्गुलम् ।।

तत्रापि विशेषोऽनेनैव दर्शितः -

सुसूक्ष्मं हीनदन्तस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ।।

*(दन्तधावने दिग्भेदेन फलभेदः)*

*गर्गः* -

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च ।
दक्षिणेन तथा [4]कष्टं पश्चिमेन पराजयः ।
उत्तरेण गवां नाशं स्त्रीणां परिजनस्य च ।
प्रक्षाल्येदं शुचौ देशे दन्तधावनमुत्सृजेत् ।
पतितेऽभिमुखे सम्यक् भोज्यमाप्नोत्यसंशयम् ।

*मार्कण्डेयपुराणे* -

प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनम् ।
प्रक्षाल्य भक्षयेत् पूर्वं प्रक्षाल्यैव च सन्त्यजेत् ।

---

१. क्षारिणो क. २. परित्यज्य ख.
३. प्रजापति क. ४. [illegible] क.

दन्तकाष्ठान्याह *नारदः* -

[1]खदिरश्च करञ्जश्च कदम्वश्च वटस्तथा ।
तिन्त्रिणीवेणु(काष्ठं)च आम्रो निम्वस्तथैव च ।
[2]अपामार्गश्च विल्वश्च चम्पकोदुम्वरौ तथा ।
एते प्रसक्तांः प्रोक्ताश्च दन्तधावनकर्मसु ।
आसने शयने याने पादुके दन्तधावने ।
पलाशाश्वत्थकौ वृक्षौ सर्वकर्मसु गर्हितौ ।। इति

*उशनाश्च* -

कार्पासदन्तकाष्ठं च विष्णोरपि हरेच्छ्रियम् ।
न भक्षयेच्च पालाशं कार्पासं काशमेव च ।
एतानि भक्षयेद्यस्तु क्षीणपुण्यः प्रजापते ।। इति

वर्ज्यतिथीनाह *विष्णुः* -

[3]प्रतिपत्पर्वषष्ठीषु चतुर्दश्यष्टमीषु च ।
[4]नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ।।

*यमोऽपि* -

चतुर्दश्यष्टमी [5]दर्शः पूर्णिमासङ्क्रमो रवेः ।
एषु [6]स्त्रीतैलमांसानि दन्तकाष्ठंच वर्जयेत् ।
श्राद्धे जन्मदिने चैवं विवाहे जीर्णदोषतः ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् । इति ।

*व्यासोऽपि* -

श्राद्धकर्तुर्निषिद्धोऽयं न तु भोक्तुं कदाचन ।
अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
कुर्याद् द्वादशगण्डूषं विदध्याद् दन्तधावनम् । इति ।
[7]इष्टकालोष्टपाषाणैरितराङ्गुलिभिस्तथा ।
मुक्त्वा त्वनामिकाङ्गुष्ठौ वर्जयेद् दन्तधावनम् ।। इति ।

---

१. खाद्यरश्च ख. २. अजामार्ग क.
३. प्रतिपत्सर्व क. ४. सप्तम्यां ख.
५. स्पर्शो क. ६. स्त्रीतिलमाद्यानि ख.
७. इष्टकादेष्ट क.

अशेषमन्त्रसिद्ध्यर्थं मन्त्रोच्चारणसिद्धये ।
तृणपर्णैः सदा कुर्याद् अमां एकादशीं विना ।
तयोरपि च कर्तव्यं [1]जम्वूनिम्वरसालकैः ।

इति *दन्तधावनविधिः* ।

प्रसङ्गाद् गण्डूषप्रक्षेपलक्षणम् । तथा च व्यासः -

पुरतो देवता तिष्ठेत् दक्षिणे पितृदेवताः ।
[2]गण्डूषक्षेपणे तस्माद् वामभागं विधीयते ॥
तत्सङ्ख्या चतुरष्टद्विषट् [3]द्व्यष्ट गण्डूपा शुद्धिकारणात् ।
मूत्रे पुरीषे भुक्त्यन्ते तथैव मुखनिःसृतौ ॥

आचमनविधिमाह - *समाचम्येति* । सम्यक् शास्त्रोक्तविधिमनतिक्रम्य आचमनं कृत्वेत्यर्थः । आचमनार्थं उदकग्रहणप्रकारं परिमाणं चाह भारद्वाजः-

'आयतं सर्वतः कृत्वा गोकर्णाकृतिवत्करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
[4] मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ।
माषमज्जनमात्रास्तु सङ्गृह्य त्रिरपः पिबेत् ।'

उदकपानानन्तरं कर्तव्यमाह दक्षः -

[5]'संमृज्याङ्गुष्ठमूले तु द्विःप्रमृज्य ततो मुखम् ।
संहताङ्गुलिभिः पूर्वमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणौ पश्चादनन्तरम् ।

---

१. जम्वीराम्वरसालकैः क.

जम्वूनिम्वरसालकैरिति अत्र व्यवस्थामाह व्यासः -

प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् । पर्णैरन्यत्र काष्ठैस्तु जिह्वाल्लेखः सदैव तु । इति काष्ठविशेषैर्दन्तधावने फलविशेष उक्तः । ———

सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः। वज्रैर्धैर्यं वटैर्दीप्तः करञ्जैर्विजयी भवेत्।
प्लक्षे चैवार्थसम्पत्तिर्वदर्यां मधुरस्वरः । खादिरे चैव सौगन्धिर्विल्वे तु विपुलं धनम् ।
औदुम्वुरे च वाक्शुद्धिः वन्धुके च दृढश्रुतिः। सैरन्ध्रिके च सौभाग्यं पलाशे सिद्धिरुत्तमा ।
कदम्बे सकला लक्ष्मीराम्रे चारोग्यमेव च । अपामार्गे धृतिर्मेधा प्रज्ञा शक्तिर्वसु श्रुतिः ।
सुखं तथा यशोलक्ष्मीः सौभाग्यं चोपजायते । अर्केण हन्ति रोगांस्तु वीजपूरेण तु व्यथा ।
ककुभेन तथाऽऽयुष्मान् भवेत्पलितवर्जितः । इत्यादि ।

२. गण्डूषाक्षपणे क. ३. द्वेष्ट ख. ४. मौक्ताष्टक क.

५. संमृज्या[illegible] क.

अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रे पुनः पुनः ।
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ।
सर्वाभिश्च शिरः पश्चात् बाहू चाग्रेण संस्पृशेत् ।' इति ।
[1] केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ ।
द्वाभ्यां तु मार्जयेदोष्ठौ द्वाभ्यामुन्मार्जयेदपि ।
एकेन हस्तौ प्रक्षाल्य पादावेकेन प्रोक्षयेत् ।
नासिका चक्षुः श्रोत्रेषु द्वौ द्वौ न्यस्य यथाक्रमम् ।
नाभिहृत्कण्ठदोर्मूलेष्वेकमेकैकमान्यसेत् ।

केशवादिभिः त्रिभिः पीत्वा [2]शेषमुदकं सव्ये पाणावादाय तज्जलमुक्तप्रकारेण अङ्गुलिभिरादाय गोविन्दादिनामभिः करप्रक्षालनं कुर्यादिति ।

'अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राक् ब्राह्मेन तीर्थेन द्विजो नित्यमुपस्पृशेत् ।'

अङ्गुष्ठमूलस्योत्तरतः [3]प्रागायतायां रेखायां ब्राह्मतीर्थम् । प्रदेशिन्यङ्गुष्ठयोरन्तरा पितृतीर्थम् । कनिष्ठपाणितलयोरन्तरा प्राजापत्यम् । पूर्वेणाङ्गुलिपर्वणा दैवमिति ।

*(आचमननिमित्तानि)*

अथ आचमननिमित्तानि । वृहस्पतिः -

'अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।
मार्जारमूषिकास्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ।'

आचमनं कुर्यादित्यर्थः । कृत्वा मूत्रपुरीषे च [4]खान्याचान्त उपस्पृशेत् ।

*वशिष्ठः* -

क्षुते निष्ठीवने सुप्ते [5]परिधानेऽश्रुपातने ।
पञ्चस्वेतेषु चाचामेत् श्रोत्रं वा दक्षिणं स्पृशेत् ॥

श्रोत्रस्पर्शमाचमनासम्भवे वेदितव्यम् । कूर्मपुराणे -

[6]चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं दृष्ट्वा भाज्यं चापि तथाविधम् ।

---

१. केशवाजि ख.   २. विशेष क.   ३. प्रागग्रतायाम् क.
४. खासाचित क.   ५. परिधाने ख.   ६. चण्डालोच्छ क.

आचमेदश्रुपाते च लोहितस्य [1]तथैव च ।
स्त्रीणामप्यात्मनः स्पर्शे नीवीं वा परिधाय च । इति ।

स्त्रीणां स्पर्श इत्येतत्तु [2]कर्म नाधिकृतस्त्रीविषयम्। अन्यस्त्रीस्पर्शोऽपि कर्मकाल एवाचमनहेतुः । स्त्रीशूद्रोच्छिष्टभाषणमित्येतत् जपादिविषयम् ।

*साङ्ख्यायनः -*

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ।
आदित्या [3]वसवो रुद्रा वायुरग्निश्च धर्मराट् ।
विप्रस्य दक्षिणे कर्णे निवसन्ति हि सर्वदा ।

*आचारसारे -*

आपो जग्ध्वौषधीं पीत्वा कृत्वा ताम्बूलचर्वणम् ।
सौगन्धिकानि [4]सर्वाणि नाचामेत विचक्षणः ।

'आपो जग्ध्वे'ति 'अमृतापिधानमसि' इत्यादिकर्माङ्गापोभक्षणे नाचमनमित्यर्थः । अपां पाने त्वाद्यन्तयोराचमनमस्त्येव । तदुक्तं -

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसङ्ग्रहे ।
हविर्भक्षणकाले वा तद्वद्विराचमनं स्मृतम् ।
[5]होमे भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेत् अन्यत्र च सकृत्सकृत् ।

श्वादीन् स्पृष्ट्वाऽपि चाचामेत् कर्णं वा दक्षिणं स्पृशेत् । जान्वोरधस्तात् [6]श्वादिस्पर्शे आचमनम् । अन्यत्र स्नानविधानात् । बोधायनः -

पादक्षालनशेषेण नाचामेद् वारिणा द्विजः ।
शुध्यभावेऽपि यत्किञ्चित् कृत्वा भूमौ जलं स्पृशेत् ।

इत्याचमनविधिः ।

## *(अस्नातस्य क्रिया निष्फलाः)*

अथ स्नानविधिमाह - 'स्नानं कुर्याद् विधानतः' इति । विध्यनुसारेण स्नानं कर्तव्यमित्यर्थः । याज्ञवल्क्यस्तं नित्यमाह - 'प्रातर्मध्याह्नयोः स्नानं [7]मुनिभिः परिकीर्तितम्' इति । मार्कण्डेयः -

---

१. च वर्जने क. २. कर्माधिकृत क. ३. वासवो क.
४. पुष्पाणि ख. ५. धूमे क. ६. अशक्तौ ख. ७. मानिभिः क.

अस्नातस्य क्रियाः सर्वाः भवन्तीहाफला यतः ।
प्रातः समाचरेत् स्नानं तच्च नित्यमिति स्मृतम् ।।

दक्षः -

[1]अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन ।
[2]लालास्वेदसमाकीर्णः शयनादुत्थितः पुनः ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातः स्नानं विशोधनम् ।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत् ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ।। इति ।

योगयाज्ञवल्क्यः -

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेः त्रिषवणस्नानं सकृत् च ब्रह्मचारिणः ।।

वानप्रस्थस्य प्रातर्मध्याह्नयोःस्नानं ब्रह्मचारिणश्च सकृदिति अशक्तविषयम् । अत एव याज्ञवल्क्य आह -

'[3]दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्।' इति

स्मृतिसङ्ग्रहेऽपि -

'स्नायात् प्रातश्च मध्याह्ने ब्रह्मचारी तथा गृही।' इति

कात्यायनः -

यथाहनि तथा प्रातः नित्यं [4]स्नायादनातुरः ।
दन्तान् विशोध्य नद्यादौ गेहे च तदमन्त्रवत् ।

यथा नद्यादौ स्नायात्तथा गृहेऽपि स्नायादिति योजना । तत् प्रातःस्नानम् । अत्र प्रातःस्नाने सर्वथा न मन्त्रनिषेधः । अपि तु तद्विस्तरनिषेधः । अत एव प्रातःस्नानस्य सङ्क्षेपः कात्यायनेन दर्शितः -

अल्पत्वाद् होमकालस्य वहुत्वात् स्नानकर्मणः ।
[5]प्रातः सङ्क्षेपतःस्नानं [6]होमलोपो विगर्हितः ।। इति

कालनियममाह जावालिः -

---

१. अज्ञात्वा ख. २. लाजावेद क.
३. दाता वर्षणशायी ख. ४. स्नानादनातुरः ख.
५. प्राक् सङ्क्षेपतःस्नानं क. ६. हेमलाभो क.

आचरेदुषसि स्नानं तर्पयेद्देवमानुषान् ।। इति
उषस्युषसि यत् स्नानं सन्ध्यायामुदितेऽपि च ।
प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनम् ।। इति

उदये उदयमुखे उदयस्याप्युपरि स्नानं समाचरेत् । ततश्च [1]सन्ध्योत्कृष्यते स्नानपूर्वकत्वात् सन्ध्यायाः ।

स्नाने प्रवाहाभिमुख्यमाह जावालिः -

प्रवाहाभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा ।

वाजसनेयी त्वादित्याभिमुख एव स्नानं समाचरेत् ।' अथाऽतो नित्यस्नानं नद्यादौ ' इत्युपक्रम्य ' सूर्याभिमुखो मज्जेत् ' इति सूत्रात् ।। २ ।।

३. तन्त्रदीपिका

ततः प्रकृतमाह - स्मृत्वेति ।

"प्रातः कालादिकं कर्म नित्यनैमित्तिकं तथा ।
केशवाराधनार्थाय करिष्येऽहं तवाज्ञया ।। "

इत्यनुसन्धानपूर्वकमुत्थाय यथाविधि विध्यनुसारेण, कृतशौचः धौतदन्तः समाचम्य स्नानं कुर्यात् । तत्रायमभिप्रायः -

[2]रवेरुदयतोऽह्यर्वाक् मुहूर्ते [3]पञ्चमेऽ[4]थवा ।
[5]यामे वा पूर्वतोऽर्धे वा सर्वथोत्थाय तं हरिम् ।
स्तुवीत पुण्डरीकाक्षं सर्वमङ्गलरूपिणम् ।।

इति विष्णुतीर्थीयोक्तरीत्या [6]विष्णुं तद्भक्तांश्च स्मरेत् । भगवद्भक्तस्मरणस्य गजेन्द्रमोक्षादावभिधानात् ।

'समुत्थाय' इत्यत्रोपसर्गात् परैरुद्बोधनमन्तरा [7]भयेन स्वयमेवोत्थायेत्यभिप्रैति ।

'शौचं स्नानं द्वयं मातापितरौ सर्वकर्मणाम् ।
शौचाचारविहीनस्य समस्तं कर्म निष्फलम् ।।'

---

१. सन्ध्या कृष्यते ख.
२. XXXXXX तो
३. पश्चिमे क. ४. स्वयम् क. ५. एकमेवापि तदर्धेर्वा क.
६. भगवद्भक्तस्मरणं च क. ७. [illegible] ख.

इति स्मृतेः शौचं कर्तव्यम् । तदपि -

'वहिःस्थले प्रकुर्वीत मलमूत्रविसर्जनम् ।
न गोष्ठे न शुचौ देशे न वने केवलस्थले ।।
न वल्मीके नाऽपि कूपे न च्छायायां न च पद्धतौ ।
नदीजले न कर्तव्यं मलमूत्रविसर्जनम् ।'

इति वायुपुराणरीत्या ज्ञेयम् ।

नदीजलेन यः कुर्यात् शौचं कर्म द्विजाधमः ।
विष्टाकूपे पतत्याशु [1]स्वर्गस्थैः पितृभिः सह ।।
तस्मात् कमण्डलुजलं न त्यजेत कदाचन । इत्युक्तेश्च ।
एका लिङ्गे करे तिस्रः उभयोर्मृद्द्वयं स्मृतम् ।

इति मूत्रविषये 'तथा पञ्चापाने दशैकस्मिन् उभयोः [2] सप्तमृत्तिकाः। पादयोः सप्तकृत्वः स्यात् ' इति तथा -

'अन्यशौचावशिष्टं च वर्जयेन्मृत्तिकां वुधः ।'
एवं यावद्गृहस्थस्य द्विगुणं व्रह्मचारिणः ।। इति ।
एतच्छौचं गृहस्थस्य द्विगुणं व्रह्मचारिणः ।
वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् ।

इत्यादि च प्रमाणसिद्धमनुसन्धेयम् । तदुपरि मनःशुद्धिपर्यन्तम् । मार्गे रात्र्याद्युक्तविधानपूर्वकं कुर्यात् ।

' प्रतिपत्पर्वषष्ठीषु [3]नवमीद्वादशीषु च ।
दन्तानां काष्ठसंयोगात् दहत्यासप्तमं कुलम् ।'

इत्यादौ काष्ठसंयोगनिषेधात् ' तृणपर्णैः सदा कुर्यात् [4] अमां एकादशीं विना' इत्याद्युक्तदन्तधावनम् ।' तदभावे चतुरष्टद्विषट्द्व्य्ष्टगण्डूषैः शुद्धिरुच्यते । मूत्रे पुरीषे [5]भोज्ये च मुखप्रस्रवणेषु च ।' इति उक्तषोडशगण्डूषेण वा मुखशुद्धिं कृत्वा "गोकर्णाकृतिहस्तेन [6]फेनबुद्बुदवर्जितम् । माषमग्नप्रमाणस्य ह्यन्यूनानधिकं पिवेत् । तथान्तर्जानुकरो भूत्वा" इत्याद्युक्तरीत्या आचमनं कृत्वा स्नानं कुर्यात् इति । २ ।

---

१. समस्तैः क.    २. पञ्च ख.
३. सप्तमी क.    ४. अजामूं ख.
५. भोज्ये च क.    ६. फेनबुद्बुद क.

## *सदाचारस्मृतिः*

*( स्नानप्रकारनिरूपणम् )*

उद्धृतेति मृदाऽऽलिप्य द्विषडष्टषडक्षरैः ।
त्रिर्निमज्याप्यसूक्तेन प्रोक्षयित्वा पुनस्तथा ।
मृदाऽऽलिप्यं निमज्य त्रिस्त्रिर्जपेदघमर्षणम् ।। ३ ।।

### *१. आह्निककौस्तुभः*

जलस्नानप्रकारमाह - *उद्धृतेति* । शुचिदेशादानीतां मृदं नदीप्रान्ते स्थाप्य जलादावाप्लुत्य तां मृदं त्रेधा कृत्वा 'उद्धृतासि वराहेण' इति [1]त्र्यृचेन द्विभागमृत्तिकया शरीरं ललाटप्रभृतिषु लेपयित्वा त्रिवारं स्नात्वा तृतीयभागं हस्तेन गृहीत्वा, द्विवारं षट् अष्ट वा षड् वा अक्षराणि येषां ते द्विषडष्टषडक्षराः, तैः वासुदेवद्वादशाक्षरमन्त्रेण नारायणाष्टाक्षरमन्त्रेण विष्णुषडक्षरमन्त्रेण प्रत्येकं त्रिवारं स्नात्वा आचम्य 'आपो हिष्ठा' इत्यब्दैवतेन त्र्यृचेन कलेवरं प्रोक्षयित्वा पुनस्तथा अवशिष्टया मृदा 'उद्धृतेति' त्र्यृचेन शरीरमालिप्य पुनरपि त्रिवारं स्नात्वा, अप्सु आविष्कृतपृष्ठः सन् निमज्यैव '[2]ऋतं च सत्यं च' इति त्र्यृचमघमर्षणसूक्तं त्रिवारं जपेत् इति योजना । ३ ।

### *२. प्रकाशिका*

स्नानप्रकारमाह - उद्धृतेत्यादि स्मरन् इत्यन्तेन । उद्धृतेत्यादिमन्त्रेण मृदा मृत्तिकया लिप्य आलिप्येत्यर्थः । मृत्तिकाग्रहणप्रकारश्च उच्यते - तत्र दक्षः - [3]चतुर्थं तु तथा भागे स्नानार्थं मृदमाहरेत् इति । पूर्वाह्णस्य चतुर्भागे। एतदपि मध्याह्नस्नानाभिप्रायम् । स्नानात् पूर्वमूर्ध्वपुण्ड्रं धारयेत् । अत्रायं

---

१. एवमत्र मन्त्रपाठः -
"उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिते। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।।
मृत्तिके प्रतिष्ठितं सर्वं तन्मे निर्णुद मृत्तिके। त्वया हतेन पापेन गच्छामि परमां गतिम्।।"
(म.ना. 40.41.)

२. ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः ।
समुद्रादर्णवादधि संवत्सरोऽजायत । अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ।
सूर्या चन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ।

३. चतुर्थ्यन्तं तु

प्रकारः - शुचिदेशादुद्धृतां मृदं शुचिदेशे निधाय नद्यादौ वा पूर्वस्थितां मृदं त्रेधा कृत्वा उद्धृतेति मन्त्रेण एकभागं गृहीत्वा ललाटवाहुहृदये आलिप्य द्वितीयभागेन सशेषेण पृष्ठ-उदर-कच्छद्वयम् आलिप्य शेषेण नाभि-ऊरु-जघनमालिप्य तृतीयभागं हस्ते गृहीत्वा स्नायात् । तदनन्तरं कर्तव्यमाह -

'*द्विषडष्टषडक्षरैः त्रिर्निर्मृज्य*' इति । द्विषट् वासुदेवद्वादशाक्षरम् । अष्टेत्यष्टाक्षरम् । षडक्षरं [1]विष्णुषडक्षरम् । एतान् मन्त्रानुच्चार्य त्रिवारं मज्जनं कृत्वेत्यर्थः । तदनन्तरं कर्तव्यमाह - 'आप्यसूक्तेन प्रोक्षयित्वा' इति । 'आपो हिष्ठे'ति [2]अर्धर्चेन मन्त्रेण मार्जनं कृत्वेत्यर्थः । तदनन्तरं कर्तव्यमाह - '*पुनस्तथा मृदालिप्येति*' । पुनरिति पूर्वापेक्षया तथेति प्रकारान्तरनिषेधार्थं त्रिवारं मज्जनं कुर्यात् । तदनन्तरं कर्तव्यमाह - '*त्रिजपेदघमर्षणम्*' इति । जलमध्ये भूत्वा आविष्टो वा 'ऋतं च सत्यं च' इत्यघमर्षणमन्त्रं [3]त्रिवारं जपेत् इत्यर्थः ।

### *३. तन्त्रदीपिका*

तद्विधानमाह - *उद्धृतेति* । इदमुपलक्षणम् । अत्रामलकपिष्ट गोमयादीनामपि ग्रहणम् ।'तथामलकपिष्टेन गोमयेन समाचरेत्' इति वाराहवचनात् । तथा च प्राणायामसङ्कल्पपूर्वकं प्रथमं त्रिवारं निमज्य पश्चात् मृत्तिकालेपनं कार्यम् ।'त्रिर्निमज्य च पश्चात्तु मृत्तिकास्नानं आचरेत्' इति विष्णुधर्मोत्तरोक्तेः ।

*(मृत्तिकालेपनेनैव स्नानं कर्तव्यम्)*

[4]ततः सकृन्मृत्तिकालेपनेन स्नानं कर्तव्यम् । तदनन्तरमाचमनम् ।

'आदाय तुलसीमूलमृत्तिकां [5]पत्रसंयुताम् ।
मन्त्रेणैवाभिमन्त्र्याथ सर्वाङ्गेष्वनुलेपनम् ।
कृत्वाप्सु सकृदुन्मज्य पश्चादाचमनं चरेत् ।।'

इति स्मृतेः ।

ततो दक्षिणोरौ मृदं त्रिभागतया विधाय मूलमन्त्रेण सम्प्रोक्ष्य गायत्र्यष्टशतं जप्त्वा पुनः प्रथमभागं द्विधा कुर्यात् ।

'तुलसीमृदमादाय ह्यथवा शुद्धमृत्तिकाम् ।
दक्षिणोरौ निवेश्याथ [6]त्रिभागां तां तु कारयेत् ।

---

१. कृष्ण क.  २. अदर्धने ख.  ३. द्विवारं क.
४. ततोऽसकृन्मृत्तिका ख.  ५. पात्रसंयुताम् ख.  ६. द्विभागां क.

मूलमन्त्रेण सम्प्रोक्ष्य गायत्र्यष्टशतं जपेत् ।
अंशमेकं समादाय त्रिभागां तां तु कारयेत् ।
मृदाऽऽलिप्य तु देहे तु लिप्य प्रक्षालयेत् त्रिशः ’। ।इति।

तथा द्वितीयभागमपि त्रिधा कुर्यात् । एतेष्वपि द्वितीयं तु देहे कक्षादिकेष्वपि.। अंसजानुषु पृष्ठे च लिम्पेत् सर्वत्र तां मृदम् ।

मृदं [1](गृह्य) गुरून्नत्वा हरिं च तदनुज्ञया ।
अवतीर्य जलं गत्वा आभिमुख्यं भवेदथ ।।

इति विष्णुतीर्थीयोक्तेः ।

*उद्धृतेति* ।‘ उद्धृतासि वराहेण कृष्णेन शतबाहुना ’ इति मन्त्रेण । तथा ‘ अक्षिभ्यां ते नासिकाभ्यां कर्णाभ्याम् ’ इत्यालिप्य स्नायात् इति । ततो *द्विषडष्टषडक्षरैः* त्रिर्निमज्य वासुदेवद्वादशाष्टाक्षरविष्णुषडक्षरैः एकैकवारमथवा प्रत्येकं त्रिवारं वा मज्जनं कुर्यात् ! ‘आप्यसूक्तेन प्रोक्षयित्वा ’ इति । ‘आपो वा इदं सर्वं’ ‘आपो हिष्टा’ ‘दधिक्राव्णो अकारिषम्’ ‘इमं मे गङ्गे’ ‘अत्याशनादतीपानात्’ इत्यादिसूक्तैः प्रोक्षणम् ।प्रोक्षणात्पूर्वमाचमनं कर्तव्यम् ।

‘उन्मृज्याङ्गानि चाचान्त आप्यसूक्तेन प्रोक्षितः ।
पूर्ववन्मृदमालिप्य ततो मज्येत तत्परः ’ ।।

इति नारायणपण्डिताचार्यकृतयोगदीपिकोक्तेः ।

पुनस्तृतीयभागं त्रिधा कृत्वा लिप्य त्रिवारं मज्जनं कर्तव्यमित्याह - मृदा लिप्य इति । अत्र त्रिरित्यव्ययम् ।द्विस्त्रिरुक्तिरित्यादिव्यवहारदर्शनात् । ततो अघानां पापानां मर्षणं परिहारकं स्नानं कर्तव्यमित्याह त्रिर्जपेदघमर्षणम् इत्यादि । ‘ऋतं च सत्यं च’ ‘तद्विष्णोः परमं पदम्’ इति [3]त्रिवारं जपेत् इत्यर्थः ।

---

१. गुष्टे क. ख.  २. आज्य क.

३. त्रिवारं *जपेदिति* । अत्रेदं बोध्यम् -

स्नानं पञ्चविधम् - मलस्नानम्, मन्त्रस्नानम्, ध्यानस्नानम्,
वारुणस्नानम्, जलस्नानं चेति।

**मलस्नानम् -**

जले त्रिवारं निमज्य, गोमयादीन् सर्वाङ्गेभ्यो विलिप्य देहशुद्धिं सम्पादयेत् ।

*सदाचारस्मृतिः*

स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम् ।
यतश्वासो निमज्याप्सु प्रणवेनोत्थितस्ततः ॥
सिञ्चेत् पुरुषसूक्तेन स्वदेहस्थं हरिं स्मरन् ॥ ४ ॥

*१. आह्निककौस्तुभः*

[1]यावत् श्वासनिरोधं यतश्वासः अप्सु निमज्य अघमर्षणं कृत्वा 'ऋतं च सत्यं च' इत्यादि [2]ऋगर्थभूतं सर्वलोकानां सप्तलोक - समुद्राहोरात्र्यादिकाल-सूर्यचन्द्रादीनां सृष्टिहेतुं परं सर्वोत्तमं नारायणं स्मृत्वा ततः जलात् प्रणवेनोत्थितः

---

मलापकर्षणहेतुभूतमिदं मलस्नानम् । शीतविरिणा स्नातुमशक्तः गृहे यदि उष्णोदकेन स्नाति, तदा तुलसीमृत्तिकां तत्र निक्षिप्य गायत्र्या चाभिमन्त्र्य स्नायात् । प्राक्तनदिनसङ्गृहीतजलादिना स्नाने तु स्नानाङ्गदेवर्ष्यादि तर्पणं नास्ति । उक्तं च - नास्त्युद्धृतजले देवर्षिपितृतर्पणम् इति ।

मन्त्रस्नानम् -

रुग्णः स्नानाशक्तश्चेत् तदाऽऽर्द्रवस्त्रेण देहं विशोध्य निर्मलवस्त्राणि धृत्वाऽऽचम्य गायत्र्या मूलमन्त्रेण वा त्रिवारं जलमभिमन्त्र्य तुलस्या स्वात्मानं प्रोक्षयेत् । जलाभिमानिदेवतास्मरणपूर्वकं आपो हिष्टा इति मन्त्रेणात्मानं प्रोक्ष्य ततः सन्ध्यादि समाचरेत् ।

ध्यानस्नानम् -

ज्वरादिना तप्तः कथञ्चिदपि स्नानाशक्तः, स्वशिरसि अमितविक्रमस्य त्रिविक्रमस्य सन्निधानं विचिन्त्य तत्पादाम्बुजविनिस्सृतां सकललोकपावनीं पापमलापहारिणीं गङ्गां स्वदेहे सर्वत्र निपतन्तीमनुसन्धाय गङ्गाजनकस्मृत्यादिना स्वात्मानं पूतं विभावयेत् । इदं ध्यानस्नानम् । ततः सन्ध्यादि कुर्यात् ।

वारुणस्नानम् -

कूपे-सरसि वा शास्त्रोक्तप्रकारेणावगाहनं वारुणस्नानम् । अवगाहं तु वारुणम् इत्युक्तेः । वारुणस्नानजलस्नानपरायणानां मन्त्रस्नानं ध्यानस्नानं चावश्यकमेव । अधिकाचरणस्यानुसन्धानस्य वाऽधिकफलप्राप्तिहेतुत्वात् ।

जलस्नानम् -

गङ्गादिपवित्रतीर्थेषु सरसि वा देवर्ष्यादितर्पणपुरस्सरं शास्त्रोक्तक्रमेण स्नानम् जलस्नानं इत्युच्यते । प्रकारविशेषस्तूत्तरत्र स्फुटः ।

१. यावत् इति क कोशे नास्ति । २. ऋगर्थं म.

ओङ्कारार्थस्मरणपूर्वकमुत्थितः सन् स्वदेहस्थं स्वदेहस्थान्नमयनामकमनिरुद्धं स्मरन्, 'द्वादशान्ते व्यवस्थितः' इत्युपनिषदि उक्तं तुर्यं हरिं वा स्मरन् पुरुषसूक्तेन स्वशाखास्थेन प्रोक्षयेदित्यन्वयार्थः ।

अत्र जलान्तः [1]पितृस्नानं गुरुस्नानम् अघमर्षणात् पूर्वं कृत्वा तीर्थस्नानं जलतर्पणं च कृत्वा यावद्विन्दुपातं शिखोदकं दत्वा शुष्कवस्त्रेण [2]सप्तवाताहता -र्द्रवस्त्रेण देहं मार्जयेत्, नार्द्रेणेत्यादिकं द्रष्टव्यम् ।

आरम्भे 'यथाविधि' इत्युक्तत्वात् अन्ते 'कृता सङ्क्षेपतः शुभा' इति वक्ष्यमाणत्वात् तत्तच्छाखाविहितानि सुलभानि अविरुद्धानि तदन्यशाखिभिरप्यवश्यं कार्याणीत्यनुजानाति, 'यस्मिन् सर्वाणि' इत्युपक्रमे 'सदाचारस्य विषये' इत्युपसंहारे वदन् भाष्यकारः ।[3]

( जलतर्पणम् )

जलतर्पणादिकमुक्तम् -

---

१. पितृस्नानम् इति क कोशे, गुरुस्नानमिति ख कोशे नास्ति ।

२. सप्तवाताहतार्द्रवस्त्रेणेति क कोशे नास्ति ।

३. एवमत्र पञ्चसंस्कारसङ्ग्रहोक्तरीत्या आचारक्रमोऽनुसन्धेयः -

अथ नित्यस्नाने प्रथमं मलापकर्पणार्थं त्रिर्निमज्य तीरं गत्वा तत्प्राक्षाल्य उपविश्य, देवस्य सम्पुटोत्पाटनं कृत्वा, निर्माल्यं विसृज्य, स्नानपात्रे सालग्रामादीन् निधाय, पूर्वमानीतमृत्तिकां वा सपत्रमूलमृत्तिकां वा भूमौ निधाय, तिथिवारानुक्त्वा श्रीविष्णुप्रेरणयेत्यादिना सङ्कल्प्य तां प्रणवेन प्रोक्ष्य, गायत्र्याऽभिमन्त्र्य पूर्वोक्तं मृदं द्वेधा विधाय प्रथमभागं गृहीत्वा हस्ताभ्यां रवेर्दर्शयित्वा, 'स्योना पृथिवी' इति मन्त्रं पठन् पदद्वयमधोमुखे निमृज्य हस्तौ प्रक्षाल्य एवं पुनर्द्विवारं ततो द्वितीयभागं गृहीत्वा पूर्ववद् रवेः सन्दर्श्य ' गन्धद्वाराम् ' इति ' उद्धृतासि' इति त्र्यृचेन फाले बाह्वोः पार्श्वयोः पादान्तं विलिप्य करौ प्रक्षाल्य एवं पुनर्द्विवारं द्वितीयभागं कृत्वा -

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ।।

इति अर्घ्यत्रयं दत्वा -

अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ।।

इति तीर्थरक्षकं भैरवमनुज्ञाप्य

तत्पादसलिलं मूर्ध्नि [1]धृत्वा तीर्थं ततो बुधः ।
त्रिः पिवेत् तीर्थमाहात्म्यमन्त्रान् वै समुदीरयन् ।
तत आचम्य कुर्वीत तर्पणं जलसंस्थितः ।
ब्रह्मादिदेवान् भूर्देवान् भुवस्स्वर्भूर्भुवस्थितान् ।
ऋषीन् द्वैपायनादींश्च भूर्भुवःस्वस्थितांस्तथा ।
तर्पयेच्चाग्निकव्यवाहनादींश्च पितॄंस्तथा ।

---

समस्तजगदाधार शङ्खचक्रगदाधर ।
देव देहि ममानुज्ञां युष्मत्तीर्थनिषेवणे ।।

इति तीर्थान्तःस्थितदेवं चानुज्ञाप्य तृतीयमृदं दक्षिणहस्ते दृढं गृहीत्वेतरेण तत् स्थलं प्रक्षाल्य देवं गुर्वादींश्च नमस्कृत्य जलं प्रविश्य नाभिमात्रोदके वा जानुमात्रे वा नद्यां नद्यभिमुखेऽन्यत्र रव्यभिमुखं त्रिर्निमज्य मृत्तिकां ककुदि विलिप्य त्रिराचम्य त्रीन् प्राणानायम्य, किञ्चिन्मृदं विलोड्य शेषं गृहीत्वा शिर आदि सर्वाङ्गेषु तारेण निर्मृज्य द्विषडष्टषडक्षरैः प्रत्येकं त्रिर्निमज्य तत्काले जलाशायिनं नारायणं ध्यात्वा तैर्मन्त्रैर्यावच्छक्यं जप्त्वा प्रणवेनोत्थायाब्लिङ्गैर्मन्त्रैः शिरोहृदंशयोः सर्वाङ्गं शङ्खमुद्रया सम्प्रोक्ष्य 'ऋतं च सत्यं च' इत्यृचं त्रिः पठित्वा यावत्श्वासनिरोधं वाघमर्षणं कृत्वा पूर्ववद् ध्यात्वा उत्थाय प्रागुक्तमुद्रया पुंसूक्तेन प्रतिपादेन स्वदेहस्थं हरिं स्मरन् स्वशिरस्यभिषिच्याचम्योदकेन ऊर्ध्वपुण्ड्रं धृत्वा तीरं गत्वा तत्स्थलं त्रिःप्रक्षाल्यापसव्येन,

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।।

इति परिधानवस्त्रं पितृतीर्थेन निपीड्य द्विराचम्य ततो देवं विधिवदभिषिच्य तत्तीर्थं सनकादिभ्यो दत्वा स्वयं च स्नात्वा पीत्वा देवर्षिपितॄन् तर्पयित्वा आचम्य यावच्छिरस्योदकस्रावलम्बितकरो भूत्वा हरिस्मरणेन स्थित्वा शुद्धवस्त्रं,

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।।

इति सम्प्रोक्ष्य पूर्वमुत्तरीयमितरच्चोर्ध्वकच्छपूर्वकं धृत्वोपविश्य पादौ प्रक्षाल्य गण्डूषं कृत्वा द्विराचम्य प्रागुक्तक्रमेण ऊर्ध्वपुण्ड्रान् धृत्वाऽऽचम्य स्वसूक्तोक्तप्रकारेण सन्ध्यावन्दनं कृत्वा,

'वस्त्रं चतुर्गुणीकृत्य पीडयेत्तु जलाद्बहिः ।
वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेत् ।।
निष्पीडितं धौतवस्त्रं यदा स्कन्धेन निक्षिपेत् ।
तदासुरं भवेत्कर्म पुनः स्नानेन शुद्ध्यति ।।' इति ।।

स्मृत्याद्युक्तदिशा कर्मानुष्ठेयम् ।

१. कृत्वा ख.

ये के चास्मत्कुले जाता [1]अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।
इति मन्त्रेण वस्त्राम्भो दद्यात् निष्पीड्य चाम्बुनि ।
ततस्तीरं समासाद्य यक्ष्माणं तर्पयेद् द्विजः ।
यन्मया दूपितं तोयं शारीरमलसम्भवम् ।
तत्पापशोधनार्थाय यक्ष्माणं तर्पयाम्यहम् ।
इति मन्त्रेण सङ्गृह्य तीरे वार्यञ्जलिं क्षिपेत् ।। इति ।

अत्र वस्त्रस्य निष्पीडनं नाम न गुदाच्छादकवस्त्रस्य, किन्तु स्नानकाले यजुःशाखिभिः कटिबद्धस्य तदितरैस्तु [2]वामप्रकोष्ठे स्थितस्योत्तरीयस्यैव वस्त्रस्येति बोध्यम् ।

तेन

निराशाः पितरो यान्ति शापं दत्वा तु दारुणम् ।
निष्पीडयति यो वस्त्रमतर्प्य च तिलैःपितॄन् ।।

इति वाक्यबाधः ।

यावद् देवान् ऋषींश्चैव पितॄंश्चापि न तर्पयेत् ।
तावन्न पीडयेद् वस्त्रं येन स्नातो भवेन्नरः ।।

इति योगीश्वरवचोविरोधः ।

निष्पीडयति यो मूढः स्नानवस्त्रमतर्पितम् ।
निराशाः पितरस्तस्य शप्त्वा गच्छन्ति नान्यथा ।।

इति वाराहवचनबाधश्च परास्तो वेदितव्यः । तिलतर्पणोत्तरं निष्पीड्यमानस्य गुदवस्त्रत्वात् । इदमेवाभिप्रेत्य वाक्यान्तरं च -

स्नानादनन्तरं तावत् तर्पयेत् [3]पितृदेवताः ।
उत्तीर्य पीडयेद् वस्त्रं सन्ध्यावर्त्म ततः परम् ।। इति ।

तर्पणोत्तरमपि निष्पीडितं गुदवस्त्रं वामप्रकोष्ठे निक्षिपेत्, नान्यत्र । यथोक्तं विष्णुपुराणे -

निष्पीड्य [4]सदशं वस्त्रं चतुर्गुणितमम्बुनि ।

---

१. अविद्या ख. २. वामपृष्ठे क.
३. परदेवता क. ४. सदृशं ख.

[1]प्रागग्रमुदगग्रं वा आर्द्रवस्त्रं प्रसारयेत् ।
दक्षिणाग्रं पश्चिमाग्रं पुनः संस्कारमर्हति ।
[2]ईषद्धूतं स्त्रियाधूतं शूद्रधूतं तथैव च ।
अधूतं करधूतं वा पूर्वेद्युर्धूतमेव च ।
काषायं मलिनं वस्त्रं कौपीनं च परित्यजेत् ।
अलाभे धौतवस्त्रस्य [3]शाणक्षौमाविकानि च ।
* कुतपं योगपट्टं वा विवासास्तु न वै भवेत् ।

[4]द्वितीयवस्त्रनियममाह विष्णुपुराणे -
होमे दैवार्चनाद्यासु क्रियासु स्नानभोजने ।
नैकवस्त्रः प्रवर्तेत द्विजो नाचमने जपे ।। इति ।
'आचामेच्च द्विजो वस्त्रे धौते विपरिधाय च ।' इति ।

*( तिलकधारणक्रमः )*

अथ तिलकविधिः । तत्साधनमृद उक्ताः ब्रह्माण्डे -
'पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
[5]सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिताः ।
मृद एतास्तु सङ्ग्राह्या वर्जयेदन्यमृत्तिकाः ।'

वासुदेवोपनिषदि च -
'ब्राह्मणानां तु सर्वेषां [6]वैदिकानामनुत्तमम् ।
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं [7]विधीयते ।
गोपीचन्दनाभावे तु तुलसीमूलमृत्तिकाम् ।
मुमुक्षुर्धारयेन्नित्यम् अपरोक्षस्य सिद्धये ।
गोपीचन्दनलिप्ताङ्गो देहस्थानानि तस्य यः ।
अस्थीनि चक्ररूपाणि भवन्त्येव दिने दिने ।'

सत्यव्रतः -
'[8]गोमतीतीरसम्भूतां गोपीं वापीसमुद्भवाम् ।

---

१. प्रागग्रे उदकाग्रे वा ख.
*कुतपः - पार्वतीयाजरोमनिर्मितकम्बलः ।
२. ईषद् धूमं क. ग.
४. द्वितीयास्त्वमाह ख.
३. शणकूर्माविकानि ख.
५. सिन्धुवारे क.
६. वैदिक * * * * * ख.
७. विधूयते ख.
८. लोमती क.

मृदं मूर्ध्ना वहेत् स्नातः सर्वपापैः प्रमुच्यते ।।

इति । भारते -

जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना विभर्त्ति यः ।
विभर्त्ति रूपं [1]सोऽर्कस्य तमोनाशाय केवलम् ।।

*(त्रिपुण्ड्रं पञ्चपुण्ड्रं वा धारयेत्)*

पाद्मे -

विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः ।
पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् ।
[2]तिर्यक्पुण्ड्रवते यस्तु तिलकाय प्रयच्छति ।
चन्दनं गोपिमर्दं तु निरयं यात्यसंशयम् ।
तिर्यक्पुण्ड्रं न कुर्वीत [3]सम्प्राप्ते मरणेऽपि च ।
न चान्य नाम विब्रूयाद् [4]परं नारायणाद् ऋते ।
गङ्गातीरोद्भवां मृत्स्नां विष्णुपादजलैः सह ।
धारयेदूर्ध्वपुण्ड्राणि सर्वकामफलाप्तये ।
गोपीचन्दनपुण्ड्रं तु तुलसीमूलमृत्तिकाम् ।
[5]देवप्रसादगन्धं च देवस्याङ्गारधूपकम् ।
हुतशेषं तथा भस्म इत्येतत् पञ्च पुण्ड्रकम् ।
त्रिपुण्ड्रं पञ्चपुण्ड्रं वा धारयेद् द्विजसत्तमः ।
स्नात्वा मृदोर्ध्वपुण्ड्रः स्यात् [6]हुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धाद्यैः त्रिपुण्ड्रं धारयेद् द्विजः ।
दण्डाकारं ललाटे तु पद्माकारं तु वक्षसि ।
वेणुपत्राकृतिं बाह्वोः अन्यैर्दीपाकृतिर्भवेत् ।
यज्ञो [7]दानं तपो होमो स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वं ऊर्ध्वपुण्ड्रं विना कृतम् ।
अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यं ऊर्ध्वपुण्ड्राङ्कितो नरः । इति ।

---

१. तार्क्ष्यस्य ख. २. * * * * * क.
३. सम्भवे क. ४. पादं ख.
५. दिवा प्रः क. ६. हित्वा ख. ७. ज्ञानं क.

व्रह्माण्डे -

ऊर्ध्वपुण्ड्रविहीनस्य [1]स्मशानसदृशं मुखम् ।
अवलोक्य मुखं तेषां आदित्यमवलोकयेत् ।
[2]नासादि केशपर्यन्तं विष्णोः पादाकृतिर्यथा ।
तथैव धारयेत् पुण्ड्रं हरिमन्दिरसंज्ञितम् ।
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
सान्तराले समासीनो हरिस्तत्र श्रिया सह ।
निरन्तरालं यः कुर्याद् ऊर्ध्वपुण्ड्रं द्विजाधमः ।
ललाटे तस्य सततं शुनः पादौ न संशयः ।
तस्मात् छिद्रान्वितं पुण्ड्रं [3](साधकानां) सुखावहम् ।
धारयेद् व्राह्मणो नित्यं [4]हरिसालोक्यसिद्धये ।
सुदर्शनेनाङ्कितवाहुमूलाः
  तथोर्ध्वपुण्ड्राङ्कितसर्वगात्राः ।
मालारविन्दाक्षधरा विशुद्धाः
  रक्षन्ति लोकान् दुरितौघसङ्घात् ।

*( मुद्राधारणमन्त्राः स्थानानि च )*

अथ मुद्रामन्त्राः -

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ।
पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोर [5]संसारार्णवपातिनम् ।
संसारभयभीतानां योगिनामभयप्रदः ।
पद्महस्तश्च यो देवः योगीशं तं नमाम्यहम् ।
व्रह्माण्ड [6]भवनारम्भमूलस्तम्भो गदाधरः ।
कौमोदकी करे यस्य तं नमामि गदाधरम् ।
नारायण नमस्तेऽस्तु नाममुद्राङ्कितो नरः ।
तं दृष्ट्वा लभते मुक्तिं चण्डालो ब्रह्मघातुकः ।

---

१. स्वश्वान क. २. नागादि क. ३. * * * * * क. ख.
४. हरिसामीप्य क. ५. संसारवणया क. ६. भाजना ख.

अथ तिलकमुद्राधारणस्थानानि -

ललाटे केशवं विद्यात् नारायणमथोदरे ।
वक्षःस्थले माधवं च गोविन्दं [1]कण्ठकूवरे ।
विष्णुं च दक्षिणे कुक्षौ वाहुके मधुसूदनम् ।
त्रिविक्रमं कण्ठदेशे वामे कुक्षौ च वामनम् ।
श्रीधरं वाहुके वामे हृषीकेशं तु कन्धरे ।
अपरे पद्मनाभः स्यात् पृष्ठे दामोदरं तथा ।
[2]तत्प्रक्षालिततोयं च वासुदेवं च मूर्धनि ।
कृष्णे सङ्कर्षणादीनि एवं धृत्वा तु पुण्ड्रकम् ।
हृदये दक्षिणे पार्श्वे श्रीवत्सं चापि विन्यसेत् ।
मत्प्रियार्थं शुभार्थं वा राज्यार्थं चतुरानन ।। इति

तथा च प्रयोगपारिजाते - वाह्वोर्वेणुपत्रवत् कर्णयोर्दण्डवत् । हृदये कमलवत्। उदरे दीपवत् । पृष्ठे जम्बूपत्रवत् । ककुदि पलाशवत् ।

अथ चक्रादिधारणम् - तथा च वशिष्ठः -

चक्रादिचिह्नहीनेन स्थापिते [3]यन्त्रकर्मणि ।
न सान्निध्यं हरेर्याति क्रियाकोटिशतैरपि ।
अवैष्णवस्थापितानां प्रतिमानां च वन्दनम् ।
यः करोति स मूढात्मा रौरवं नरकं व्रजेत् ।
चक्रसंयुत[4]विप्रो हि त्रिषु लोकेषु पूजितः ।
तस्मात्तु वैष्णवा एव नियोज्याः सर्वकर्मसु ।
दक्षिणे तु भुजे विप्रो विभृयाद् वै सुदर्शनम् ।
सव्ये तु शङ्खं विभृयात् इति वेदविदो विदुः ।
ललाटे तु गदा धार्या मूर्ध्नि [5](चापधरो) तथा ।
हृन्मध्ये नन्दकं चैव शङ्खचक्रे भुजद्वये ।

अन्यच्च -

१. गण्डकूवरे क. २. तत्पक्ष ललिलं क. ३. मन्त्र ख.
४. विद्रु यो हि क. ५. चापहर इति क. ख.

द्वे चक्रे दक्षिणे बाहौ शङ्खमेकं तथैव हि ।
मध्ये पद्मद्वयं चेव नारायणचतुष्टयम् ।
शङ्खद्वयं वामबाहौ चक्रमेकं तथैव हि ।
मध्ये गदाद्वयं धार्यं नारायणचतुष्टयम् ।
कण्ठे कुक्षौ द्वयं धार्यमेकमेकं [1]कपोलयोः ।
दक्षिणे तु सहस्रारं वामे शङ्खं हरेः प्रियम् ।। इति

( *स्त्रीणामूर्ध्वपुण्ड्राधारणे प्रत्यवायः* )

'गोपीचन्दनपुण्ड्रं च स्त्रीणां धर्मः सनातनः ।
पुण्ड्रहीने तु नारीणां [2]पत्युरायुःक्षयो भवेत् ।
पुण्ड्रं समृत्तिकां त्यक्त्वा अन्यद्रव्येण धारणम् ।
सुवासिन्या मुखं दृष्ट्वा आदित्यमवलोकयेत् ।
ऊर्ध्व[3]पुण्ड्रं विना नारी यज्ञस्यान्तं करोति या ।
न गृह्णन्ति हरिस्तस्या गृह्णन्ति ब्रह्मराक्षसाः ।'

तथा च यमः -

'तैलाभ्यङ्गे विवाहे च सूतके मृतकेऽपि च ।
गोपीमृदं धारयेद्यः नैव याति यमालयम् ।।'

( *तुलसीमाला कण्ठेऽवश्यं धार्यैव* )

मुद्राधारणानन्तरं तुलसीमालां धारयेत् । तदुक्तं गारुडे -

तुलसीकाष्ठमालाभिः भूषितः पुण्यमाचरन् ।
पितॄणां देवतानां च कृतं कोटिगुणं कलौ ।
तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ।
दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा जलम् ।

( *तुलसीमालाधारणक्रमः* )

स्कान्दे च -

---

१. कपालयोः क. २. पत्युराय ख.
३. पुण्ड्रविना ख.

[1]सन्निवेद्यैव हरये तुलसीकाष्ठसम्भवाम् ।
मालां पश्चात् [2]स्वयं धत्ते स वै भागवतोत्तमः ।
हरये नार्पयेद्यस्तु तुलसीकाष्ठसम्भवाम् ।
मालां धत्ते स्वयं मूढः [3]स याति नरकं ध्रुवम् ।
क्षालितां पञ्चगव्येन मूलमन्त्रेण [4]मन्त्रिताम् ।
गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेच्च ताम् ।
विधिवत्परया भक्त्या सद्योजातेन पूजयेत् ।

'सद्योजातं प्रपद्यामि सद्योजाताय वै नमः' इति तैत्तिरीयोपनिषदि ।

ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः
ते वैष्णवा भुवनमाशु पवित्रयन्ति ।
धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि ।
स वैष्णवो न हि ज्ञेयो विष्णुपूजारतोऽपि यः ।
भुजयुगमपि चिह्नैरङ्कितं यस्य विष्णोः
[5]परमपुरुषनाम्नां कीर्तनं यस्य वाचि ।
ऋजुतरमपि पुण्ड्रं मस्तके यस्य कण्ठे
सरसिजमणि [6]माला यस्य तस्यास्मि दासः ।

इति मालाविधिः ।

**अथ प्रातः सन्ध्यामाह - आचम्येत्यादि मन्त्रतः परिवृत्येत्यन्तेन । अस्यार्थः - 'आचम्य' केशवाद्याचमनं कृत्वेत्यर्थः । तद्विधिरुक्तः प्राक् । 'प्रोक्ष्य' 'आपो हि ष्ठा' इत्यादित्रिऋचा । 'मन्त्रतः' मन्त्रेण 'सूर्यश्च' इत्यादिनेत्यर्थः । 'आचम्य' उदकं पीत्वेत्यर्थः । [7]तृतीयार्थे तसिः । तेन मन्त्रस्याचमनं प्रति करणतावगमात् याज्यया यजतीत्यत्र याज्यपाठानन्तरं**

१. सन्निकर्षेण ख.
२. स्वयं इति क कोशे नास्ति ।
३. न क.
४. यन्त्रिताम् ख.
५. प्रथमं क.
६. माता ख.
७. तृतीयार्थे तसिः इति ख कोशे नास्ति ।

[1]यागवन्मन्त्रपाठानन्तरम् आचमनमभिप्रैति । यत्र तृतीया करणे गायत्र्येत्यादौ तत्राप्येवमेव व्याख्येयम् । अत्र 'गायत्र्या चाञ्जलिम्' इति एकवचननिर्देशो नैकाञ्जलिविषयः । किन्तु एकैकोऽञ्जलिरेकैकया गायत्र्या देय इति प्रत्यञ्जलिगायत्रीपाठविषयः ।

तथा ह्यञ्जलित्रयमाह व्यासः -

करांभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् [2]त्रिःक्षिपेत् सन्ध्ययोर्द्वयोः ।

इति । 'सूर्यगतम्' सूर्यस्थितम् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेः । 'यदादित्यगतं तेजः' इत्यादि स्मृतेश्च । *हरिं ध्यात्वेति* । ध्यानं तु वक्ष्यते 'ध्येय' इत्यादिना । 'मन्त्रतः' - 'असावादित्यो ब्रह्म' इति मन्त्रेण, परिवृत्य [3]परिक्रम्येत्यर्थः । सन्ध्यास्वरूपं तु दक्षेण प्रदर्शितम् ।

[6]'अहोरात्रस्य यः सन्धिः
[4]सूर्यनक्षत्रवर्जितः ।
सा तु सन्ध्या समाख्याता
मुनिभिस्तत्वदर्शिभिः' ।। इति

यद्यपि सन्ध्याशब्दोऽत्र कालवाची प्रतीयते । तथापि तस्मिन् काले उपास्यदेवता [5]सन्ध्याशब्देनोपलक्ष्यते ।

अथवा सन्धौ भवा क्रिया सन्ध्या तथा च व्यासः -

'उपास्तिः सन्धिवेलायां
निशाया दिवसस्य च ।
तामेव सन्ध्यां [6]तस्मात्तु
प्रवदन्ति मनीषिणः' ।। इति

'सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा' इति च ।

*( नारायण एव कालभेदेन गायत्र्यादिशब्दवाच्यः )*

कालभेदात् देवताया नामान्याह व्यासः -

---

१. यांज्यव क.　२. प्रक्षिपेत् क.　३. पराक्रमा क.
४. सूर्यनक्षत्र क.　५. सन्ध्याशब्देनोपलक्ष्यते ख.　६. तस्मात्तु ख.

गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती [1]च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ।
प्रतिग्रहादन्नदोषात् पातकात् उपपातकात् ।
गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः ।
सवितुर्द्योतनात्सैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री सा वाग्रूपत्वात् सरस्वती ।

तन्नामत्रयवाच्यदेवता नारायण एव । छन्दोऽभिधानात् इति सूत्रे गायत्री शब्दस्य छन्दःपरत्वमाक्षिप्य भगवत्परत्वं समर्थितं भगवता । सन्ध्योपास्तिप्रकारस्तु अस्मत्कृतसान्ध्याख्यग्रन्थे द्रष्टव्यः ।

परिक्रमणानन्तरं यथोक्तप्रकारेण आसनगुरुनमस्कार - पापपुरुषचिन्तन-शोषण-दहनादि कार्यम् । ततस्तत्वन्यासमातृकान्यासान् कृत्वा गायत्री[2]मासूर्योदयं तिष्ठन् जपेत् ।तत्त्रिगुणमष्टाक्षरं च । अनुदितहोमी चेत् आसन्नसूर्योदयं ज्ञात्वा किञ्चिदेव [3]सन्ध्यां समाप्य निर्माल्यविसर्जनं कृत्वा होमं कुर्यात् । ततः चिकीर्षितं जपं कुर्यात् । उदितहोमी च उदयानन्तरम् एवमेव ।

*( निर्माल्यविसर्जनम् )*

अथ निर्माल्यविसर्जनं नृसिंहपुराणोक्तं निरूप्यते -

देवमाल्यापनयनं देवागारे [4]समूहनम् ।
स्नापनं देवदेवस्य गोप्रदानसमं स्मृतम् ।।

पञ्चरात्रे च -

यः प्रातरुत्थाय विधाय नित्यं
निर्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रता च
नाकालमृत्युर्न च रोगमात्रम् ।

*(अरुणोदयात् प्राक् निर्माल्यविसर्जनाऽकरणे प्रत्यवायः)*

अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत् ।

---

१. चापराह्णे क.  २. मासोदयं क.
३. सन्ध्या समाप्येति ख कोशे नास्ति ।  ४. समापनम् ख.

प्रातस्तु स्यात् [1]महाशल्यं घटिकामात्रयोगतः ।
अतिशल्यं विजानीयात् ततो वज्रप्रहारवत् ।
अरुणोदयवेलायां शल्यतुल्यमतो [2]हरेः ।
घटिकायामतिक्रान्ते क्षुद्रपातकमाहरेत् ।
मुहूर्ते समतिक्रान्ते पूर्णं पातकमुच्यते ।
ततः परं ब्रह्मवधो महापातकपञ्चमम् ।
[3]प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ।
निर्माल्यस्य विलम्बे तु प्रायश्चित्तमथोच्यते ।
अतिक्रान्ते मुहूर्तेऽर्धे सहस्रजपमाचरेत् ।
पूर्णे मुहूर्ते सञ्जाते सहस्रं सार्धमुच्यते ।
सहस्रद्वितयं कुर्यात् घटिकानां चतुष्टये ।
मुहूर्ते तृतीयेऽतीते अयुतं जपमाचरेत् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं न विद्यते ।
तृषिताः पशवो [4]वद्धा कन्या चैव रजस्वला ।
देवता च सनिर्माल्या हन्ति पुण्यं पुरा कृतम् ।

( *औपासननिरूपणम्* )

अथौपासनविधिः निरूप्यते -

द्वादशाहमनग्नीकः सन्ध्याहीनो [5]दिनत्रयम् ।
चतुर्वेद्यपि विप्रस्तु शूद्र एव न संशयः ।
यथा स्नानं यथा सन्ध्या वेदाध्यायस्तथैव च ।
तथैवोपासनं दृष्टं न स्थितिस्तद्वियोगतः ।
कृतदारो न वै तिष्ठेत् क्षणमप्यग्निना विना ।
तिष्ठेत वै द्विजो व्रात्यः तथा च पतितो भवेत् ।
यो दद्यात् [6]काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत्सर्वं प्रातर्होमस्य तुल्यं भवति वा न वा । इति ।

कात्यायनो होमकालमाह -

यावत्सम्यङ् न भास्यन्ते नभस्यृक्षाणि सर्वशः ।

---

१. महीशल्यं ख. २. विभोः क. ३. प्रकरे क.
४. [illegible] ख. ५. दिनद्वयम् ख. ६. [illegible] ख.

गायत्री नाम पूर्वाह्ने सावित्री मध्यमे दिने ।
सरस्वती [1]च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ।
प्रतिग्रहादन्नदोषात् पातकात् उपपातकात् ।
गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः ।
सवितुर्द्योतनात्सैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री सा वाग्रूपत्वात् सरस्वती ।

तन्नामत्रयवाच्यदेवता नारायण एव । छन्दोऽभिधानात् इति सूत्रे गायत्री शब्दस्य छन्दःपरत्वमाक्षिप्य भगवत्परत्वं समर्थितं भगवता । सन्ध्योपास्तिप्रकारस्तु अस्मत्कृतसान्ध्याख्यग्रन्थे द्रष्टव्यः ।

परिक्रमणानन्तरं यथोक्तप्रकारेण आसनगुरुनमस्कार - पापपुरुषचिन्तन-शोषण-दहनादि कार्यम् । ततस्तत्वन्यासमातृकान्यासान् कृत्वा गायत्री[2]मासूर्योदयं तिष्ठन् जपेत् ।तत्त्रिगुणमष्टाक्षरं च । अनुदितहोमी चेत् आसन्नसूर्योदयं ज्ञात्वा किञ्चिदेव [3]सन्ध्यां समाप्य निर्माल्यविसर्जनं कृत्वा होमं कुर्यात् । ततः चिकीर्षितं जपं कुर्यात् । उदितहोमी च उदयानन्तरम् एवमेव ।

*( निर्माल्यविसर्जनम् )*

अथ निर्माल्यविसर्जनं नृसिंहपुराणोक्तं निरूप्यते -

देवमाल्यापनयनं देवागारे [4]समूहनम् ।
स्नापनं देवदेवस्य गोप्रदानसमं स्मृतम् ।।

पञ्चरात्रे च -

यः प्रातरुत्थाय विधाय नित्यं
निर्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रता च
नाकालमृत्युर्न च रोगमात्रम् ।

*(अरुणोदयात् प्राक् निर्माल्यविसर्जनाऽकरणे प्रत्यवायः)*

अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत् ।

---

१. चापराह्ने क. २. मासोदयं क.
३. सन्ध्या समाप्येति ख कोशे नास्ति । ४. समापनम् ख.

प्रातस्तु स्यात् [1]महाशल्यं घटिकामात्रयोगतः ।
अतिशल्यं विजानीयात् ततो वज्रप्रहारवत् ।
अरुणोदयवेलायां शल्यतुल्यमतो [2]हरेः ।
घटिकायामतिक्रान्ते क्षुद्रपातकमाहरेत् ।
मुहूर्ते समतिक्रान्ते पूर्णं पातकमुच्यते ।
ततः परं ब्रह्मवधो महापातकपञ्चमम् ।
[3]प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ।
निर्माल्यस्य विलम्बे तु प्रायश्चित्तमथोच्यते ।
अतिक्रान्ते मुहूर्तेऽर्धे सहस्रजपमाचरेत् ।
पूर्णे मुहूर्ते सञ्जाते सहस्रं सार्धमुच्यते ।
सहस्रद्वितयं कुर्यात् घटिकानां चतुष्टये ।
मुहूर्ते तृतीयेऽतीते अयुतं जपमाचरेत् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं न विद्यते ।
तृषिताः पशवो [4]वद्धा कन्या चैव रजस्वला ।
देवता च सनिर्माल्या हन्ति पुण्यं पुरा कृतम् ।

*( औपासननिरूपणम् )*

अथौपासनविधिः निरूप्यते -

द्वादशाहमनग्नीकः सन्ध्याहीनो [5]दिनत्रयम् ।
चतुर्वेद्यपि विप्रस्तु शूद्र एव न संशयः ।
यथा स्नानं यथा सन्ध्या वेदाध्यायस्तथैव च ।
तथैवोपासनं दृष्टं न स्थितिस्तद्वियोगतः ।
कृतदारो न वै तिष्ठेत् क्षणमप्यग्निना विना ।
तिष्ठेत वै द्विजो व्रात्यः तथा च पतितो भवेत् ।
यो दद्यात् [6]काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत्सर्वं प्रातर्होमस्य तुल्यं भवति वा न वा । इति ।

कात्यायनो होमकालमाह -

यावत्सम्यङ् न भास्यन्ते नभस्यृक्षाणि सर्वशः ।

---

१. महीशल्यं ख. २. विभोः क. ३. प्रकरे क.
४. मुग्धा ख. ५. दिनद्वयम् क. ६. कनकं ख.

लोहितत्वं न चापैति तावत्सायं च हूयते ।। इति ।

प्रातर्होमकालस्तु मनुना प्रदर्शितः, व्यासेनाऽपि -

रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते ।
कालं तमुदितं प्राहुः होमं कुर्याद् विचक्षणः ।
तथा प्रभातसमये [1]नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयोऽध्युषितस्तु सः ।
रेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः ।
उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत् ।। इति

*(औपासनद्रव्याधिकारिकालनिरूपणम्)*

आश्वलायनस्तु [2]'आसङ्गवात्तु प्रातर्होमकाल' इत्याह । तत्र आश्वलायनः होमद्रव्यमाह - 'होम्यं च मांसवर्ज्यम्' इति । अस्यार्थः - अग्निहोत्रे यानि द्रव्याणि दध्यादीनि, तन्मध्ये मांसं वर्जयित्वा शिष्टस्यौपासने कुर्यात् इति । कात्यायनः -

[3]कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि त्वकृतं प्रोक्तम् इति हव्यं त्रिधा मतम् ।

इति । दक्षः -

स्वयं होमे फलं यत् स्यात् [4]तदन्येन न लभ्यते ।
होमे यत्फलमुद्दिष्टं जुहुतुः स्वयमेव तु ।
हूयमानं तदन्येन फलमर्धं प्रपद्यते ।
ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरपि हुतं यत् स्यात् तद्हुतं स्वयमेव तु ।

विट्पतिर्जामाता ।

यजमानः प्रधानः स्यात् पत्नी पुत्रश्च कन्यका ।
ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेयः [5]सुतापतिः ।
हविष्येषु तिला मुख्या तदनु व्रीहयः स्मृताः ।
अभावे व्रीहियवयोर्दध्ना वा पयसाऽपि वा ।
तदभावे यवाग्वा तु जुहुयादुदकेन वा ।
यथोक्तवस्त्वसम्प्राप्तौ ग्राह्यं तदनुसारि च ।

---

१. नर्ते ख. २. आसंगस्तु क. ३. घृतमो ख.
४. तदन्येन ख. ५. सुता पति ख.

यवानामिव गोधूमा व्रीहीणामिव [1]शालयः ।

आहुतिपरिमाणमाह वृहस्पतिः -

प्रस्थधान्यं चतुःषष्टिराहुतेः परिकीर्तितम् ।
तिलानां तु तदर्धं स्यात् तदर्धं स्याद् घृतस्य तु ।
वहुशुद्धेन्धने चाग्नौ सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ।
यो निरर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
[2]मन्दाग्निरामयावी च दरिद्रश्चोपजायते ।
जुहुषुश्च हुतेश्चैव पाणिसूर्पाश्मदारुभिः ।
न कुर्यादग्निधमनं न कुर्याद् व्यजनादिना ।
मुखेनैव धमेदग्निं मुखादेष व्यजायत ।

मुखेन धमनं न साक्षात् । किन्तु नालिकादिव्यवधानतः ।

शरीरोपद्रवो यत्र [3]भयाद्वात्ति प्रजायते ।
तथा सत्स्वपि चापत्सु पक्षहोमो विधीयते ।
पक्षहोमान् यथा कृत्वा गत्वा तस्मान्निवर्तितः ।
होमं पुनः [4]प्रकुर्यात्तु न चासौ दोषभाग् भवेत् ।
निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजस्तथा ।
प्रवसेत्त्वर्थवान् विप्रो वृथैव न चिरं वसेत् ।
विहायाग्निं सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमाकालात्यये तस्य पुनराधानमिष्यते ।

अथ प्रयोगः । अग्निं प्रज्वाल्य तिथ्यादि स्मृत्वा, अग्निप्रजापती देवते अमुकद्रव्येणाहं यक्ष्य इति प्रतिज्ञाय अग्निमलङ्कृत्य समिधमादाय जुहुयात् -

ओम् अग्नये स्वाहा अग्नय अनिरुद्धाय इदं न मम । ओम् प्रजापतये स्वाहा प्रजापतये मुख्यप्राणान्तर्गत श्रीवासुदेवाय इदं न मम । एवं प्रातः सूर्यप्रजापती सूर्यान्तर्गतः सङ्कर्षणोऽनिरुद्धश्च ध्येयः । तदुक्तं छान्दोग्यभाष्ये तैत्तिरीये च -

---

१. शशयः क. २. मन्दाग्निरामयावी क.
३. 'भयाद् व्याधिः' भयादाधिरिति पाठः स्यात् ।
४. प्रकुर्यात् स इति पाठः साधुरिति भाति ।

‘यस्माद् वायौ [1]स्मृतो विष्णुर्वायोर्मुख्यतयाखिलात् ।
स्वस्य मुख्यतया तस्मात् [2]परां तुष्टिं गमिष्यति ।
तथापि प्राण एवासौ [3]प्रीतिमागादुपासित’ । ।

इति छान्दोग्यभाष्ये ।

‘अनिरुद्धस्तु भूर्नामा हुताशे सव्यवस्थितः ।
प्रद्युम्नो भगवान् वायौ भुव इत्येव कीर्तितः ।
सङ्कर्षणस्सुवर्नामा सूर्ये तिष्ठति केशवः ।
[4]महा नामा वासुदेवो ब्रह्मणिस्थः चतुर्मुखः’ । ।

इति *तैत्तिरीयभाष्ये*। ‘भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तम’ इति भागवततात्पर्यानुसारेणाप्यनुसन्धातव्यम् । एवमग्निमुपस्थाय तमलङ्कृत्य दम्पती नमस्कुर्याताम् । तदनन्तरं यथेष्टं जपः कर्तव्यः । *जपप्रकारस्तु सविस्तरम् अस्मत्कृतमन्त्रमालापूजापद्धतौ द्रष्टव्यः ।*

तदेवम् ‘आचम्य’ ‘प्रोक्ष्य’ इत्यादिना ‘मन्त्रतः परिवृत्य’ इत्यन्तेन *प्रातःसन्ध्याजपहोमान्तानि (कर्माणि) सूचितानि* ।

*(स्वस्वशाखाध्ययनरूपब्रह्मयज्ञं कर्तव्यम्)*

इदानीं ब्रह्मयज्ञमाह - *समाचम्येति* । आचम्येत्यत्र [5]तव्यप्रत्ययस्तु क्रमसूचको न भवति किन्तु आचमनतर्पणयो[6]र्मध्ये किञ्चित्कर्तव्यं सूचयति । तच्च योग्यतया ब्रह्मयज्ञ एवेति भावः । ‘स्वशाखाध्ययनं विप्र ब्रह्मयज्ञ इति स्मृतः’ इति लिङ्गपुराणे ।

*(ब्रह्मयज्ञंकालः)*

तस्य कालमाह श्रुतिः - ‘उदित आदित्य उपविश्य हस्ताववनिज्य’ इति । अत्र ‘उदित आदित्ये’ इत्यनेन उदयात्प्राकालो निषिध्यते । न तु उदयकालः । तस्य होमकालत्वात् । अत एव ब्रह्मणस्पतिः -

[7]स चार्वाक् तर्पणात् कार्यः पश्चाद् वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदा त्वनिमित्ततः । । इति ।

---

१. सुतो ख. २. परितुष्टिं क. ३. प्रतिमागादुपासित क.
४. * * * * * क. स्वाहा ख. ५. तलव्य क.
६. मध्ये इति क कोशे नास्ति । ७. [illegible] ख.

'अनिमित्तत' इत्यनेन होमानन्तर्यादीनां मुख्यकालत्वमभिप्रेतम् ।

"[1]दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
शर्वर्याः प्रथमे यामे तानि सर्वाणि कारयेत् ।
[2]ब्रह्मयज्ञावगाहं च सौरं च परिवर्जयेत्' ।। इति

भूतयज्ञो मनुष्ययज्ञो पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति पञ्च महायज्ञनि। तेषां सर्वेषां वैश्वदेवत्वात् 'वैश्वदेवावसान' इत्यनेन [3]मनुष्ययज्ञानन्तर्यं ब्रह्मयज्ञस्य सूचयति । तदुक्तं कूर्मपुराणे -

यदि स्यात् तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ।
कृत्वा मनुष्ययज्ञं तु ततः स्वाध्यायमारभेत् ।। इति

*(ब्रह्मयज्ञे देशविशेषक्रमादिनिरूपणम्)*

देशनियममाह योगयाज्ञवल्क्यः -'अपां समीपे नियतो नैत्यकं विधि -मध्यगौ' इति । शौनकोऽपि [4]"प्राग्वोदग्वा ग्रामात् निष्क्रम्य' इति। योगयाज्ञवल्क्यः -

'प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु [5]दर्भपाणिभ्यां संहताभ्यां कृताञ्जलिः ।
स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।' इति

त्रिराचम्य दर्भपाणिः दर्भेषूपविष्टः दक्षिणजानुनि सव्यहस्तमुत्तानं निधाय तत्र प्रागग्रं दर्भद्वयं तुलसीनिर्माल्यं कृत्वा तदङ्गुलीषु दक्षिणहस्त अङ्गुलीर्निधाय स्वाध्यायं पठेत् । तत्रायं क्रमः - प्रथमं प्रणवमुच्चार्य भूर्भुवःस्वरिति व्याहृतीर्व्याहरेत्। ततो गायत्रीं [6]पादे पादे अवसाय पठेत् । अतोऽर्धर्चे अर्धर्चेऽवसाय पठेत् । अत्र सकृदेव प्रणवोस्योच्चारणं व्याहृतीनां च । ऋगादि स्वाध्यायं यथाशक्ति पठेत् । तत्प्रशंसनोक्ता वाजसनेयके - 'इमां पृथिवीं वित्तेन पूर्णां लोकं जयति' इति ।

अनध्यायेष्वपि तस्यावश्यकतामाह मनुः -

नैत्यके नास्त्यनध्यायो ब्रह्मसूत्रं हि तत् स्मृतम् ।
तथा वेदोपकरणे चैव स्वाध्यायेनैव नैत्यके ।

---

१. दैवोदितानि ख.   २. ब्रह्मयज्ञावसाद क.   ३. मनुष्यज्ञानानंन्तर्यं क.
४. ग्रामके क.   ५. दर्भा ख.   ६. पादे पादे इति ख कोशे नास्ति ।

नानुरोधोऽस्त्यनध्याये [1]होममन्त्रेषु चैव हि ।। इति [2]वेदोपकरणं [3]कल्पसूत्रादि ।

तर्पणमाह - *सुरादिकान् तर्पयित्वा* इति । वृहस्पतिः -

ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ।
जप्त्वाऽथ प्रणवं चापि ततस्तर्पणमाचरेत् ।

वसिष्ठोऽपि -

ऋक्सामाथर्ववेदोक्तान् जप्यान् मन्त्रान् यजूंषि च ।
जपित्वैव ततः कुर्याद् देवर्षिपितृतर्पणम् ।

तर्पणप्रशंसा पुराणे दर्शिता -

एवं यः सर्वभूतानि तर्पयेदन्वहं [4]द्विजः ।
स वै गच्छेत् परं स्थानं तेजोमूर्तिमनामयम् ।

अकरणे प्रत्यवायमाह हारीतः -

देवाश्च पितरश्चैव वाञ्छन्ति सलिलाञ्जलिम् ।
अदाने तु निराशास्ते प्रतियान्ति यथागतम् ।
देवान् ऋषीन् पितॄंश्चैव न तर्पयति [5]योऽबुधः ।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः ।

तत्राञ्जलिसङ्ख्यामाह व्यासः -

एकैकमञ्जलिं देवाः द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रीन् त्रीन् स्त्रियश्चैकैकमञ्जलिम् ।
[6]मातुस्त्रिरञ्जलिं दद्यात् सर्वेषामेकमञ्जलिम् ।
सापत्निमातृभार्तॄणां द्वौ द्वौ दद्यात् तिलाञ्जली ।

आश्वलायनानां कात्यायनानां च देवऋषिपितृतर्पणेषु एकद्वित्र्यञ्जलयः।

---

१. होमतन्त्रेषु क. २. वेधांपकरणम् ख. ३. कथासूत्रादि क.
४. नरः ख. ५. यो मुधा क. ६. मातुस्तिलाञ्जलिं क.

अत एव कात्यायनसूत्रम् -

'एकैकस्य तिलैर्मिश्रान् त्रीन् त्रीन् दद्यात् जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।'

अन्येषां स्वशाखानुरूपम् ।

उपवीतादिविशेषो विष्णुपुराणे दर्शितः -

'सव्येन देवकार्याणि वामेन पितृतर्पणम् ।
[1]निवीतेन मनुष्याणां तर्पणं संविधीयते ।
सनकश्च [2]सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोधः पञ्चशिखस्तथा ।
एवं ब्रह्मसुतास्सप्त मनुष्याः परिकीर्तिताः ।'

रजतादिपात्रैस्तर्पणेऽतिशयमाह मनुः -

राजतैर्भाजनैरेषां अथवा रजतान्वितैः ।
वार्यपि श्रद्धया दत्तं [3]अक्षय्यायोपतिष्ठते ।

कूर्मपुराणे -

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः ।
लोमसंस्थान् तिलान् कृत्वा यस्तु सन्तर्पयेत् पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च ।
ये च पाणितले स्पृष्ट्वा रोमकूपे तु ये धृताः ।
तैस्तिलैस्तर्पणं कुर्वन् पितृघाती भवेद् द्विजः ।
तस्मात्ते मणिवन्धे तु ग्राह्या विप्रैः समाहितैः ।। इति

*(तीर्थोदकेन पितृदेवतास्तर्पयेत्)*

विष्णुतीर्थीये -

विना तीर्थेन यः कुर्यात् तर्पणं तु नराधमः ।

---

१. निशीथेन क.　　२. सनादश्च क.
३. अक्षय्यमुपतिष्ठते ख.

[1]रेतोमूत्रपुरीषाणि स पितृभ्यः प्रयच्छति ।
सालग्रामशिलातोयैस्तर्पयेद् पितृदेवताः ।
[2]तत्सर्वममृतं भूत्वा नित्यतृप्तो न संशयः ।
खड्गमौक्तिकहस्तेन कर्तव्यं पितृतर्पणम् ।
मणिकांञ्चनदर्भैर्वा नाशुद्धेन कदाचन ।
अनामिक्यां धृतं हेम तर्जन्यारोप्य धारणम् ।
स्वकनिष्ठया धृतं खड्गं तेन पूतो भवेन्नरः ।
भानौ [3]भौमत्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डादानं मृदास्नानं न कुर्यात्तिलतर्पणम् ।
गृहे निषिद्धं सलिलतर्पणं तद् बहिर्भवेत् ।
विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं च न कुर्यात्तिलतर्पणम् ।

तस्यापवादमाह स्मृत्यन्तरे -

क्षयाहे [4]पातसङ्क्रान्तौ ग्रस्ते शशिनि भास्करे ।
न वारतिथिदोषोऽस्ति मन्वादिषु युगादिषु ।
तिथितीर्थविशेषेषु कार्यं प्रेतेऽथ सर्वथा । इति ।

वसिष्ठ उवाच -

ब्रह्मयज्ञं प्रकुर्वीत प्रत्यहं तिलतर्पणम् ।
पितॄनुद्दिश्य देवादीन् निषिद्धदिवसं विना ।

*(तिलतर्पणे निषिद्धदिवसनक्षत्रकालादिनिरूपणम्)*

मान्धातोवाच -

के ते निषिद्धदिवसा तद् वदस्व महामते ।
[5]नद्योदकेन किं कार्यं ब्रह्मयज्ञं महामते ।
शालग्रामोदकेनापि किं कार्यं तद्वदस्व मे ।

---

१. रजो ख. २. तत्सर्वमजरं क.
३. सोम ख. ४. पाद ख.
५. नद्योदके कथं क.

वसिष्ठ उवाच -

भानुवारे भौमवारे नन्दाभृगुमघासु च ।
त्रयोदश्यां [1]च सप्तम्यां भरण्यां कृत्तिकासु च ।
गृहे मृताहे जन्मर्क्षे सन्ध्ययोश्च तथा [2]निशि ।
एते निषिद्धा दिवसा न कुर्यात्तिलतर्पणम् ।
निषिद्धदिवसे वारे नक्षत्रे च तथा तिथौ ।
यस्तिलैस्तर्पणं कुर्यात् तज्जलं रुधिरं भवेत् ।
तीर्थे विशेषे कार्यं च तिलयुक्तं तथैव च ।
प्रेतपक्षे व्यतीपाते सङ्क्रान्तौ वैधृतावपि ।
निषिद्धेऽपि दिने कुर्यात् तिलयुक्तं तु तर्पणम् ।
अमृतं तु भवेत् प्रातः मध्याह्ने [3]क्षीरवद् भवेत् ।
अपराह्ने भवेत्तोयं सायाह्ने रुधिरं स्मृतम् ।
अथ नद्योदकेनैव न कुर्यात्तर्पणं बुधः ।
सालग्रामोदकेनैव पितॄणां तृप्तिहेतवे ।
केवलेनोदकेनैव ब्रह्मयज्ञं च मानवः ।
करोति तेन मान्धातः रुधिरेण कृतं भवेत् ।
नदीतीरे [4]तटाके वा कूपादौ राजसत्तम ।
पौरुषेयेण सूक्तेन सालग्रामाभिषेचनम् ।
देवान् ऋषीन् पितॄन् सर्वान् तर्पयेत् स्वस्थमानसः ।
सालग्रामोदकं त्यक्त्वा केवलेनोदकेन वै ।
[5]ब्रह्मयज्ञं यः करोति पितॄणां तृप्तिहेतवे ।
तेन दत्तं तु यत्तोयं तत्तोयं सुरया समम् ।
सालग्रामोद्भवं तोयं पितॄणां तृप्तिकारकम् ।
धारापूर्वं यः करोति पितॄणां तर्पणं नरः ।
तत्तोयं सुरया तुल्यं नात्र कार्या विचारणा ।
धारापूर्वं न कर्तव्यं पितॄणां तर्पणं बुधः ।
सालाग्रामोद्भवं तोयम् [6]अकृत्वा पितृतर्पणम् ।

---

१. तथाष्टम्यां क. २. दिशि क.
३. क्षारवद् क. ४. वटार्के ख.
५. [illegible] ख. ६. [illegible] ख.

यः करोति [1]नरस्तेन श्वानमूत्रं तु कुत्सितम् ।
दत्तमेव न सन्देहो नात्र कार्या विचारणा ।
तस्मात् सर्वप्रयत्नेन सालग्रामोदकेन वै ।
पितृणां तर्पणं कार्यम् अन्यथा नरकं व्रजेत् ।
इति वामनपुराणे वसिष्ठमान्धातृसंवादे द्विचत्वारिंशोऽध्यायः ।

तत्र [2]देवताद्या आह आश्वलायनः - देवतास्तृप्यन्तु । अग्निविष्णु - प्रजापतिरित्याद्या देवाः । शतर्चिनः मध्यमा इत्याद्या ऋषयः । सुमन्तु [3]जैमिनिरित्याद्याः । पितरः माध्यन्दिनाः ।

*(तर्पणीया देवर्ष्यादयः)*

योगयाज्ञवल्क्यः -

ब्रह्माणं तर्पयेत् पूर्वं विष्णुं [4]रुद्रं प्रजापतिम् ।
देवान् छन्दांसि वेदांश्च ऋषींश्चैव सनातनान् ।
आचार्यांश्चैव गन्धर्वान् आचार्यतनयांस्तथा ।
[5]सरितोऽप्यमनुष्यांश्च यज्ञान् रक्षांसि चैव हि ।
सुपर्णांश्च पिशाचांश्च भूतान्यपि पशूंस्तथा ।
वनस्पतीनौषधीश्च भूतग्रामं चतुर्विधम् ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोधः पञ्चशिखस्तथा ।
एते ब्रह्मसुताः सप्त मानवाः परिकीर्तिताः ।। इति
पितॄन् [6]दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेत् ।। इति च ।

दिव्या वस्वाद्याः । अदिव्याः स्वपित्राद्याः । विस्तरस्तु स्वस्वसूत्रे द्रष्टव्यः ।

व्यासः -

पूर्वं पित्रादयस्तर्प्याः ततो [7]मात्रादयोऽपि च ।
ततो मातामहाश्चैव मातामह्यस्ततः परम् ।। इति ।

---

१. न हस्तेन ख. २. देवत्वाद्या क.
३. जैमिनिदारुण ख. ४. रौद्रं क.
५. सहतोयं क. ६. देवानदिवान् ख.
७. पित्रादयो क.

*(पित्रादितर्पणे क्रमनिरूपणम्)*

गरुडपुराणे -

अथ मातामहादीनां तत्पत्नीनामतः परम् ।
तर्पणं च पितृव्याणां तत्पत्नीभ्यस्तथापि च ।
पितृस्वसुश्च तद्भर्तुः मातुलस्यापि नित्यशः ।
मातुलान्यास्ततो मातृस्वसुस्तत्पत्युरेव च ।
श्वशुरस्यापि कर्तव्यं श्वश्रीणामपि तर्पणम् ।
आचार्याणां ततः कार्यं आचार्याणीभ्य एव च ।
वन्धूनां भ्रातृपत्नीनां पुत्रांश्चैव स्नुषामपि ।
पुत्रीं तस्याः पतिं चैव भगिनीं तत्पतिं तथा ।
भागिनेयं च पौत्रं च दौहित्रं याज्यमृत्विजम् ।
[1]शिष्यं मित्रं च सन्तर्प्य तत्तत्पत्नीस्तथैव च ।
अन्येषामपि दातव्यं येभ्यो यं दातुमिच्छति ।
मातामह्यादिसर्वेषां एकैकं [2]सलिलाञ्जलिम् ।
दद्यात्तीर्थे विशेषेण धर्मं परममास्थितः ।। इति

ततो वस्त्रनिष्पीडनं कर्तव्यमित्याह -

निष्पीड्याथ *वासो विस्तृत्येति* । अथ तर्पणानन्तरं वासो निष्पीड्य निष्पेषणं कृत्वा [3]भूमौ निक्षिपेत् इत्यर्थः ।

ये वान्धवा अवान्धवा ये अन्यजन्मनि वान्धवाः ।
ते तृप्तिमखिलां यान्तु यश्चास्मत्तोऽपि वाञ्छति ।

इति मन्त्रेण एकाञ्जलिं भूमौ निक्षिप्य -

ये के चास्मत्कुले जाता अपुत्रा गात्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।

इति मन्त्रेण वस्त्रं निष्पीड्य भूमौ निक्षिपेत् । *विस्तृत्येति* । पश्चाद् [4]यज्ञोपवीती भूत्वा कुशानुपरि चाचामेत् इत्यर्थः । च शब्देनाचमनं सूचितम् ।। ५. ६. ।।

---

१. इष्टं ख.　　२. सजलाञ्जलिम् क.

३. भूमौ इति ख कोशे नास्ति ।

४. यज्ञवीथी क.

### ३. *तन्त्रदीपिका*

ततो वस्त्रपरिधानमाह - *वसित्वा वास इति* । अत्र [1]वस्त्रपरिधानं शुष्कवस्त्रपरिधानमेवेति ज्ञातव्यम् । अत्र केचित् - उत्तरीयार्द्रवस्त्रं परिधायार्घ्यान्तं कर्तव्यम् । तथा क्वचिदाचारदर्शनादिति वदन्ति । तथात्वे आचार्यैरनन्तरं शुष्कवस्त्रेण कर्तव्यमित्यनभिधानात् जपादावपि तथात्वापातात् । शिष्टाचारविरोधाच्च । 'निष्पीड्याथ वासो विस्तृत्य' - इत्येतन्नार्द्रवस्त्रविषयं विसर्जनविषयमिति वक्ष्यामः । तथा 'आर्द्रं स्यूतं [2]तुमुलितं खण्डितं द्विपटीकृतम् । काषायं नीलवस्त्रं च सप्त नग्नाः प्रकीर्तिताः ।' इति निषेधाच्च । 'आर्द्रवस्त्रात् जले कुर्यात् तर्पणं च जले [3]जपम्' इत्यादि-चापत्कालविषय इत्यदोषः ।

ततश्चाचमनमूर्ध्वपुण्ड्रं शङ्खचक्रधारणं कर्तव्यम् -

यज्ञो दानं तपश्चैव स्वाध्यायः पितृतर्पणम् ।
तत्सर्वं निष्फलं याति ऊर्ध्वपुण्ड्रं विना कृतम् ।
तदारभ्य हरे नित्यमूर्ध्वपुण्ड्रं विधानतः ।
त्रिसन्ध्यासु मृदा विप्रो यागकाले विशेषतः ।

इति स्मृतिः ।

मृदा गोपिकया चोर्ध्वपुण्ड्रं [4]कुर्यात्समाहितः ।
दण्डाकारं ललाटे तु हृदये पद्मकुड्मलम् ।
वेणुपत्राकृतिर्बाह्वोः अन्यान् दीपाकृतीन् न्यसेत् ।

तथा पुण्ड्रप्रमाणं तत्रैवोक्तम् -

तर्जन्यग्रप्रमाणेन मध्यच्छिद्रेण संयुतम् ।
दण्डाकारं ललाटे स्यात् एकाङ्गुलमथापि वा ।
बाह्वोर्दशाङ्गुलं प्रोक्तं [5]नवाष्ट हृदि वा भवेत् ।
नाभ्यादौ सप्तषट्कश्च फाले नासादिकेशयोः ।

इति । तर्जन्यग्रप्रमाणेनेत्यस्य मूलप्रमाणेनेत्यर्थः ।

तथा योगदीपिकायां च -

---

१. वस्त्राधानं क.
२. तुमुषितं क.
३. परम् क.
४. कुर्यात्समाहितः क. ५. नवाष्ट क.

नासिकामूलमारभ्य आकेशान्तं प्रकल्पयेत् । इति ।
ऊर्ध्वपुण्ड्रं प्रकुर्वीत चतुरङ्गुलमानतः ॥ इति च स्मृतिः ।

तथा 'ऊर्ध्वपुण्ड्रं [1]द्विरेखमालिखेत्' 'ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः ते वैष्णवा भुवनमाशु पवित्रयन्ति ।' इत्यादिषु ललाटे पुण्ड्रप्रमाणं निरूपितम् । तच्चास्मदाचार्यसम्प्रदायानुसारेण द्रष्टव्यम् ।

*(श्रोणामेकामिति श्रुत्यर्थनिरूपणम्)*

यदाहुराचार्यः -

'श्रोणामेक उदकं [2]गामवाजति मांसमेकः ।
पिशन्ति सूनया भृतं अनिम्रुचः शक्रदेको ।
अपाभरत् किं स्वित् पुत्रेभ्यः पितरावुपावतुः ।'

एको ब्राह्मणः । [3]श्रोणां शुक्लाम् । उदकम् उदकमिश्राम् । गां मृत्तिकाम् । अवाजति लिम्पति । मांसं मांसवद्दीप्यमानम् । 'सूना स्यात् घातनस्थानम्' इत्यमरः । तत्र विद्यमानमिव स्थितम् रक्तचन्दनमेकजातीयः पिशन्ति लिम्पति । एक इति वैश्यस्याप्युपलक्षणम् । अग्निम्रुचः शूद्रः । शक्रत् [4]विष्टां गोमयतश्चेत्यर्थः । अपाभरत् विभर्ति । किंस्वित् सदा । पितरावुपावतुः [5]असिजयेताम् इत्यर्थः ।

तथा - 'पञ्चायुधानि धार्याणि गोपीचन्दनमृत्सया' इति सङ्ग्रहे । 'गोविन्द [6]द्रप्स आयुधानि बिभ्रत्' इत्यादि श्रुतयोऽपि द्रष्टव्याः । तथा

'दक्षिणे तु भुजे विप्रो बिभृयात् वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयात् इति वेदविदो विदुः ॥' इति ।

तथा 'शिरश्चक्रं तु देवानां भुजचक्रं द्विजन्मनाम्' इत्यादयश्च द्रष्टव्याः ।

सन्ध्याङ्गाचमनं कर्तव्यमित्याह - *आचम्येति* । ततः 'सन्ध्यापूर्वं द्विराचम्य अर्घ्यान्ते तु द्विराचमेत् ।' इति श्रुतेर्द्विराचमनम् । एवम् आचमनप्रोक्षणाचमनानि कृत्वा अर्घ्यं दद्यात् इत्याह - *गायत्र्येति* ।

अत्र व्यासः -

---

१. सुरेख ग.　　२. गामजावति क.
३. शुक्लाम् क.　　४. पिष्टां क.
५. असिजयताम् क.　　६. द्रप्सु क.

त्रिसन्ध्यासु च गायत्र्या पूरितं चाञ्जलित्रयम् ।
अप्सु [1]क्षिपेदर्कमुखो मध्याह्ने चोत्तरामुखः ।। इति

अत्रोत्तरशव्दः पश्चिमाभिप्रायः । तथा सङ्ग्रहे -

'यो ददाति रवेरर्घ्यं धरित्र्यामप्यनापदि ।
तदिदं रुधिरं व्यातु तं च भूमिः शपिष्यति ।
तस्मात् सायं स्थले दद्यात् प्रातर्मध्याह्नयोर्जले ।
जले त्वर्घ्यं प्रदातव्यं जलाभावे [2]शुचिस्थले ।
सम्प्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्यानि प्रदापयेत् ।'

योगदीपिकायाम् -

'गोश्रृङ्गमात्रमुद्धृत्य रविं वीक्ष्य जलाञ्जलीन् ।
द्वौ पादौ तु [3]समौ कृत्वा पाणिमुद्धृत्य विक्षिपेत् ।।'

तथा, 'समुद्रमर्घ्येण पूरयति पूर्णजलं जनोऽयम्' इति । इदं तु प्रातर्माध्याह्निकार्घ्यविषयम् ।

एवमर्घ्यानन्तरं सूर्यान्तर्गतभगवद्ध्यानं कर्तव्यमित्याह - *ध्यात्वेति* । 'मन्त्रतः' - 'असावादित्यो व्रह्म' इति मन्त्रतः। 'यत् प्रदक्षिणं [4]प्रक्रिमन्ति तेन पाप्मानमवधून्वन्ति । उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् व्राह्मणो विद्वान् सकलं भद्रमश्नुते '। 'असावादित्यो व्रह्मेति व्रह्मैव सन् व्रह्माप्येति । य एवं वेद।' इति श्रुतेः । ततः आचम्य सुरादिकान् - देवादीन् तर्पयित्वेत्यर्थः।

केचिदिदं व्रह्मयज्ञ [5]तर्पणस्य विधायकमिति वदन्ति । तत्प्रमाणं तु -

देवादितर्पणात् पूर्वं सन्ध्याङ्गत्वेन यो जपेत् ।
गायत्रीमन्यमन्त्रांश्च स जपो निष्फलो भवेत् । इति ।

किञ्च 'तर्पयित्वा निपीड्य' इति आचार्यैः पितृतर्पणाङ्गवस्त्रनिष्पीडनस्य प्रतिपाद्यमानत्वाच्च । केशवादि भगवद्रूपाणां 'सुरादिकान्' इति सामान्य व्यवहारायोगाच्च । [6]आदिशव्दकृत्याभावाच्चेति ।

---

१. क्षिपेदार्तमुखो क. २. कुशस्थले क.
३. सदा ख. ४. पक्रमन्ति ख.
५. तर्पणस्य इति ख कोशे न विद्यते । ६. अथशब्द क.

तन्न । 'देवादितर्पणात्पूर्वम्' इत्यस्यायमर्थः - देवादितर्पणात्पूर्वं जलतर्पणात् पूर्वम् इति । अथवा स्नानाङ्गत्वाज्जलतर्पणस्य अङ्गाङ्गिनोरैक्यव्यपदेशेन [1]स्नानमकृत्वा 'गायत्रीमन्यमन्त्रांश्च सन्ध्याङ्गत्वेन यो जपेत् ।' स जपो निष्फलो भवेत् इत्यर्थः। "स्नानमूला कृत्याः" इति मनुस्मृतेः । अथवा व्रह्मयज्ञपरत्वेऽपि अनिष्फलो भवेदिति वक्तुं [2]शक्यत्वेन निरवकाशत्वाभावात् । किञ्च व्रह्मयज्ञशव्दार्थभूत [3]वेदावर्तनं विहाय तदङ्गतर्पणाभिधाने कारणाभावाच्च ।

स्नानानन्तरं जलतर्पणे प्रमाणं वायुपुराणे - "जलात्पश्चाद् विनिस्तीर्य तर्पयेद् देवता ऋषीन् पितृंश्च ।" इति । व्रह्माण्डपुराणे -

नित्यं नैमित्तिकं [4]काम्यं त्रिविधं स्नानमिष्यते ।
तर्पणं तु भवेत्तस्य ह्यङ्गत्वेन प्रकीर्तितम् ।। इति

जलतर्पणस्य प्रमाणसिद्धत्वात् ।

अर्घ्यानन्तरं केशवादि तर्पयेत् । प्रमाणं कूर्मपुराणे -

परिषेकं ततः कुर्यात् [5]प्रादक्षिण्यात् समाहितः ।
सन्तर्प्य केशवादींस्तान् कृष्णे सङ्कर्षणादिकान् ।।

इति । तथा विष्णुतीर्थीये -

'[6]निषीदेन्मनुनावृत्य विष्ण्वादींश्च प्रतर्पयेत् ।' इति ।

तथा योगदीपिकायाम् -

'मनुना च पुनः प्रोक्ष्य दद्यादञ्जलिमञ्जसा ।
सव्याहृत्या तु गायत्र्या सप्तव्याहृतिपूर्वया ।
त्रिःसोममनुनावृत्य विष्ण्वादींश्च प्रतर्पयेत् । इति ।
ततो जपेच्च सावित्रीं तिष्ठन्नेवोदयाद् रवेः । इति च ।'

तथा च व्यासः -

'तर्पणं केशवादीनां सन्ध्यार्घ्यानन्तरं चरेत् ।' इति ।

'सुरादिकान्' इत्यादिशव्दस्तु कृष्णपक्षे देवताभिप्राय इत्युदाहृतवचन-सिद्धत्वात् ।

---

१. स्नानमकृत्वा इति क कोशे नास्ति । २. शक्यत्वे ख. ३. वेदाध्ययनं क.
४. कार्यं क. ५. प्रादक्षिण्यक्रमात्ततः क. ६. निषादे क.

अथवा 'गृहान् वाराधिपान् सप्त [1]वेदादींश्च प्रतर्पयेत्' इति स्मृतेः आदिशव्दस्य तत्परत्वं वेति न दोषः ।

अथवा सुराणां - व्रह्मादीनां आदिभूतानीति वा । अस्य ग्रन्थस्य [2]पुराणसङ्ग्रहरूपत्वेन पौराणिकप्रयोगत्वात् सामान्योक्त्यदोषः । वक्ष्यति च 'व्यासवाक्यसमुद्धृतिः' इति । किञ्च 'न कर्मणि कर्मारम्भः' इति न्यायविरोधः ।

अत्र केचित् -

अर्घ्यान्तमेकं कर्म । अत एव सूतकादावर्घ्यदानकरणेनोपरम इति । तन्न । सन्ध्याकर्मप्रतिपादकशास्त्रेष्वुक्तकर्म [3]भेदादर्शनेन तद्विरोधात् । अन्यथा व्रह्मयज्ञमाध्याह्निकदेवपूजादिषु सर्वत्रान्तिमप्रसङ्गापत्तेः । क्वचिदर्घ्यदानकरणेनोपरमस्तु [4]अर्धकर्माधकरोभिप्रायः । तथा मन्त्रोच्चारणानधिकारेण दीक्षिततापत्न्यादीनां अर्धाधिकारांदेर्वहुशो दर्शनात् ।

किञ्च कर्म द्विविधम् । निन्दितं [5]स्तुतं चेति । निन्दितं त्याज्यं स्तुतं ग्राह्यम् । एवं चार्घ्यप्रदानकाले व्रह्मयज्ञनिषेधेन परत्र स्मृतिदर्शनात् । तथाहि - '[6]महान्तः पञ्चयज्ञाश्च दिव्येवेत्याह गोतमः'[7] इति स्मृतिः ।

तथा

'मन्दमेव पठेत् प्रातः उच्चैर्मध्यन्दिने नृभिः ।
उच्चैरेवापराण्हे तु सन्ध्याकाल उपारमेत् ।'.

आदित्योदयतः उपवीती उपविश्य हस्ताववनिज्य त्रिराचमेत् इति । 'उदित आदित्ये अध्येति' [8]इति सूत्रेण चोदया सूत्रेष्व चोदयानन्तरं तदभिधानात् ।

'स चार्वाक् 'तर्पणात् कार्यः पश्चाद् वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यत्रेति सतां मतम् ।'

इति व्यासस्मृतिः ।

'प्रातर्मध्यंन्दिने वापि व्रह्मयज्ञो विधीयते ।
मध्याह्ने तर्पणादर्वाक् वैश्वदेवात् परं व्रजेत् ।।' इति ।

---

१. विधादींश्च २. पुराणसंवादरूपत्वेन क. ३. भेददर्शने क.
४. अर्धकर्माधकरो ख. अर्धकर्माधिकार इति पाठेन भाव्यमिति भाति । ५. श्रुतं ख.
६. महान्तः ख. ७. अत्र अक्षरपातः अर्थाप्रमतिश्च स्फुटः । ८. तर्पणः क.

तथा व्यासः - अजपित्वा तु गायत्रीं ब्रह्मयज्ञं करोति यः । स ब्रह्महा समुद्दिष्टः सर्वकर्मवहिष्कृतः । इत्यादि [1]निन्दनं तु ब्रह्मयज्ञात्पूर्वं क्रियमाण गायत्रीपरमिति व्याचक्षते । तन्न । तथा क्रियमाणगायत्र्यां जपत्वेन [2]व्यवहारादर्शनात् गायत्रीजपपरत्वमेव ।

अथवैतत्परत्वेऽपि प्रकृते विरोधाभावाच्च। पञ्च संस्कारसङ्ग्रहे हारीतः -

'पूर्वोक्तविधिना सम्यक् कृत्वा सन्ध्यां समाचरेत् ।
प्रातरौपासनं हुत्वा तर्पयेद् पितृदेवताः ।।' इति

तथा भागवते (10.78.06) -

'चकार सन्ध्योपगमादि [3]सत्क्रियां हुतानलो ब्रह्म जजाप वाग्यतः।' इति ।

तथा ज्ञानपादे भगवत्पादोक्तिः - 'यः सन्ध्यामुपास्ते । ब्रह्मैव तदुपास्ते । अथ देवान् नमेत् । जुहुयात् । वेदानावर्तयीत ।'

तथा वाशिष्ठे षष्ठाध्याये -

'उपस्थाय जपं कृत्वा ब्रह्मयज्ञं समाचरेत्' इति ।

चातुर्मास्यवराहपुराणे -

अशक्तो[4]ऽपि प्रकुर्वीत ब्रह्मयज्ञं तु नित्यशः ।
इदं तु वैश्वदेवात् प्राक् ऊर्ध्वं वाऽपि समाचरेत् ।।

तथा विष्णुतीर्थीये -

"[5]उपस्थानं तु सर्वेषां विष्ण्वाद्यं देवतर्पणम् ।
आर्षं च पैतृकं चापि यत्यन्येषां विधीयते ।। इति ।

तथा योगदीपिकायाम् -

---

१. निन्दनं इति ख कोशे नास्ति । २. व्यवहारदर्श ख. ३. सत्तमो ख.
४. उपकुर्वीत क. ५. उपासानं

शुचिर्यः स्नात आचान्तः कुर्यान्माध्याह्निकक्रियाः ।
तर्पणं केशवादेश्च गृही स्वाध्यायतर्पणम् ।। इति ।

अस्मिन् वचने अर्घ्यानन्तरं केशवादितर्पणमप्युक्तम् ।

तथा विष्णुधर्मोत्तरे -

'शुचिः सन्ध्यामुपासीत कुर्याद् देवर्षितर्पणम्'

इत्यादिष्वनन्तरमेव ब्रह्मयज्ञाभिधानात् ।

अर्घ्यप्रदानकालस्तु उदयात्पूर्वकालत्वेन आचार्यैरभिहितः । 'पूर्वां सन्ध्यां सनक्षत्राम्' इति ।

तथा मनुः -

'रात्र्यान्त्ययामे नाडी द्वे सन्ध्यायाः काल उच्यते ।
दर्शनाद् रविरेखायाः तदन्तो मुनिभिः स्मृतः ' ।। इति ।
'उदयात्प्राक्तनी सन्ध्या [1]घटिकात्रयमिष्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ।।' इति ।

अत्र केचित् -

'पञ्च पञ्च उषःकालः सप्तपञ्चारुणोदयः ।
अष्टपञ्च भवेत् प्रातः शेषः सूर्योदयः स्मृतः।'

इति वचनात् अर्घ्यप्रदानकाले सूर्यादयस्य [2]विद्यमानत्वाच्च न ब्रह्मयज्ञस्य विरोध इति वदन्ति। तन्न। [3]साधनद्वादशीविषयेऽपि तथात्वापातात्। 'कण्ठार्धां द्वादशीं दृष्ट्वा' इति वचनादाचारविरोधाच्च ।

किञ्च अर्घ्यप्रदानानन्तरमेव ब्रह्मयज्ञश्चेत् उपाकर्मादावपि तथात्वापातात्। तर्हि अस्य वचनस्य का गतिरिति चेत्, साधनद्वादशीस्नानकालप्रतिपादनपरं इति ध्येयम् ।

---

१. घटिकाद्वयम् ख.

२. विद्यामान्य क.

३. साधने द्वादशी क.

एतेन 'स चार्वाक्[1]तर्पणात्कार्यः पश्चाद् वा प्रातराहुतेः । वैश्वदेवावसाने वा' इति ब्रह्मयज्ञस्य अनेककालोक्तिवदर्घ्यानन्तरकालोऽप्यस्तु इति निरस्तम् । तथात्र प्रमाणान्तराऽदर्शनात् । प्रत्युत [2]निषेधप्रमाणदर्शनात् च इत्यलम् ।

तर्हि 'निष्पीड्य' इति वस्त्रनिष्पीडनं कथमिति चेत्, अत्र केचित् स्नानान्तरं यदार्द्रवस्त्रं तदर्घ्यप्रदानपर्यन्तं स्थापयित्वा पश्चान्निष्पीड्य विसर्जयेत् इति वदन्ति । तन्न ।

'अनिपीड्य स्नानवस्त्रं सन्ध्याकर्म न कारयेत् ।
अन्यथा कुरुते मोहात् कृतं कर्म [3] च निष्फलम्' ।।

इति स्मृतेः ।

अन्ये तु

'प्रातस्सन्ध्यामुपासीत वस्त्रशोधनपूर्वकम् ।
उपास्य मध्यमां सन्ध्यां वस्त्रनिष्पीडनं चरेत्' । इति ।

तथा

'न जडे पीडयेद् वस्त्रं न चापि त्रिगुणीकृतम् ।
[4] प्रसादयेन्न याम्याग्रं प्रागग्रं तु प्रसारयेत्' ।।

इति माध्याह्निकब्रह्मयज्ञानन्तरं क्रियमाणवस्त्रनिष्पीडनमिहोच्यत इति ।

तन्न । क्रमविरोधात् । [5] मुख्यक्रमस्याभावेऽपि यस्य कस्य वा क्रमस्य वक्तव्यत्वात् । 'अञ्जसा' इति कथनस्वारस्याभावाच्च । मुख्यकर्मप्रतिपादनैदम्पर्येण प्रवृत्ताचार्याणां शोषणार्थं प्रागग्रवस्त्रविस्तारणप्रतिपादनेन विशेषादर्शनाच्च इति ।

अयमत्र क्रमः - 'निपीड्याथ वासो विस्तृत्ये'त्यर्घ्यप्रदानसूर्यान्तर्गतभगवद्ध्यानप्रदक्षिणाचमनकेशवादितर्पणानन्तरम् आसनस्य मुख्यकर्मत्वात् तत्प्रतिपाद्यते । तस्यायमर्थः - पीडा हिंसायामिति धातोः । पीडनं द्विविधम्

१. तर्पणः क. २. निषेधप्रमाणादर्शनाच्च ख. ३. ——— क.
४. प्रसादयेत् इत्यारभ्य प्रसारयेत् इत्यन्तो भागः क कोशे नास्ति । ५. मुख्यक्रम ख.

- जलपीडनं स्थलपीडनं चेति । 'न वस्त्रं करपीडितम्' इत्यादौ [1]स्थलेऽपि प्रयोगदर्शनात् । गीतायां 'चैलाजिनकुशोत्तरम्' । इति वस्त्रासनस्याभिधानात् । 'सर्वेषां करवस्त्रकम्' इत्यासनार्थवस्त्रस्य प्रमाणसिद्धत्वात् । आसनार्थं वस्त्रतन्तुग्रहणस्य [2]वस्त्रप्रत्याम्नायरूपत्वेन दर्शनाच्च । ५. ६. ।

*सदाचारस्मृतिः*

अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ ७ ॥
आसूर्यदर्शनात् तिष्ठेत् ततस्तूपविशेत वा ।
पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम् ।
उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् ॥ ८ ॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ९ ॥

*१. आह्निककौस्तुभः*

एवं सामान्यतः सन्ध्याकर्मोक्त्वा विस्तरेण [3]सन्ध्याकर्माह - *अर्केति* । 'अञ्जसा' सम्यक्, सूर्यमण्डलगतं [4]'विष्णुं 'ध्येयः सदा' इति वक्ष्यमाणप्रकारेण ध्यात्वा 'त्रिपदीं' [5]त्रिसन्ध्यासु गायत्री-सावित्री-सरस्वतीभेदेन त्रिरूपां, 'देवीं' द्योतमानां गायत्रीऋचम् उत्तमपक्षे सहस्रमितां मध्ये शतमितां अवरे दशमितां 'जपेत्' उपांशूच्चारयेत् । ७ ।

सूर्यदर्शनपर्यन्तं 'तिष्ठेत्' उत्तिष्ठेत् । उक्तसङ्ख्याकां गायत्रीं जपन्निति शेषः । ततः सूर्यदर्शनानन्तरं उपवेशने [6]स्वेच्छाधीनताद्योतनाय वा शब्दः । उपविशेत वा तिष्ठेद् वा । 'पूर्वाम्' प्रातस्तनीं सन्ध्यां सन्धिकालोपास्यत्वात् सम्यक् ध्येयत्वाद् वा सन्ध्याशब्दवाच्यां गायत्रीं सनक्षत्रां नक्षत्रदर्शनसहितां

---

१. ताले ख. २. वस्त्रप्रत्याम्नायरूपत्वेन इति ख कोशे नास्ति ।
३. सन्ध्याक्रममाह क. ४. जिष्णुं
५. त्रिसन्ध्यासु इति ख कोशे नास्ति । ६. स्वेच्छाधीनता क.

जपेत् । 'उत्तराम्' सायन्तनीं सन्ध्याम् 'उपविश्यैव' सूर्याभिमुखतः उपविश्यैव 'सदिवाकराम्' भानुदर्शनसहितां [1]सदा नित्यं जपकाले 'वाग्यतः' वाङ्नियमवानेव 'जपेत्' उपांशु पठेदित्यर्थः । ८ ।

विश्वामित्रऋषिकसन्ध्याङ्गगायत्रीध्यानं ध्येय इति । ब्रह्मगायत्री- जपध्यानस्य 'प्रोद्यदादित्यवर्णश्च सूर्यमण्डलमध्यगः । चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च' । इति तन्त्रसारे (1.42) प्रकारान्तरेणाभिहितत्वात् । ९ ।

( *ब्रह्मयज्ञतर्पणकालः* )

सन्ध्यायाः जपप्रधानकत्वात् । साङ्गसन्ध्यासमाप्त्युत्तरमेव ब्रह्मयज्ञ - तर्पणयोः कालः । प्रधानकर्मासमाप्य मध्ये पुनः प्रधानान्तरारम्भायोगात् ।

उक्तं च वाराहे -

नित्यं तु तर्पणं कृत्वा गायत्रीं यो जपेद् द्विजः ।
वृथा तस्य भवेज्जाप्यं पितृहा सोऽपि जायते ।। इति ।

अन्ये तु सन्ध्यासमाप्तेः पूर्वम् अर्घ्यान्तसन्ध्यावन्दनं कृत्वा ब्रह्मयज्ञ-देव-ऋषि-पितृतर्पणं विधाय जपसूर्योपस्थानादि कुर्यादिति वदन्ति । तेषामयं युक्तिसङ्क्षेपः -

"देवादितर्पणात्पूर्वं सन्ध्याङ्गत्वेन यो जपेत्।
गायत्रीमन्यमन्त्रांश्च तत्सर्वं निष्फलं भवेत् "

इति विष्णुतीर्थीये ।

'शुचिः सन्ध्यामुपासीत कुर्याद् देवादितर्पणम् ।
तिष्ठन्नुदयपर्यन्तं गायत्र्यष्टशतं जपेत् ।।'

इति विष्णुधर्मोत्तरे । एवमुभयवाक्य [2]प्राबल्यान्यथानुपपत्तिं दृष्ट्वा पक्षद्वयं केचित् कल्पयन्ति - अर्घ्यप्रधानं सन्ध्यावन्दनं जपप्रधानकं वेति सन्ध्यावन्दनं द्विविधम् । तत्राद्यपक्षे 'अर्घ्यान्तसन्ध्यावन्दनं कृत्वा [3]ब्रह्मयज्ञतर्पणं कृत्वा जपसूर्योपस्थानादि कुर्यात् । जपप्राधान्यपक्षे अर्घ्यजपसूर्योपस्थानं कृत्वा, अन्ते

१. सदा इति क कोशे न पठ्यते । २. शावपल्या क.
३. ब्रह्मयज्ञतर्पणं कृत्वा इति क कोशे नास्ति ।

ब्रह्मयज्ञ-देव-ऋषि-पितृतर्पणं कुर्यात्' इति ।

वयं तु ब्रूमः - भगवत्पादोक्तं सन्ध्यासमाप्त्यनन्तरं ब्रह्मयज्ञादि [1]अनुदित-होमिन अपेक्ष्य । देवादितर्पणात्पूर्वं सन्ध्याङ्गगायत्रीमन्त्रजपनिषेधकवचनं विष्णुतीर्थीयं [2]तदितरहोमिन अपेक्ष्य इति ।

तथा हि - अनुदितहोमितया सम्मतस्य कृष्णस्य आह्निके होमोत्तरं तर्पणमुक्तं भागवते (10.78.6,7) -

'अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ।
चकार सन्ध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ।
उपस्थायार्कमुद्यन्तं तर्पयित्वात्मनः कलाः ।
देवान् ऋषीन् पितॄन् विप्रान् वृद्धानभ्यर्च्य चात्मवान् ।' इति ।

[3]अनुदितहोमिनो माध्यन्दिनाः । अत एव वाजसनेयकब्राह्मणे - 'उदितहोमिनां निच्छिन्नमग्निहोत्रं मन्यामहे' इत्युदितहोमनिन्दापूर्वकमनुदित होमः समर्थितः । आश्वलायना वाह्वृचश्च सूर्योदयानन्तरमेव होमिनः । अत एवोक्तमैतरेयब्राह्मणे -

'प्रातः [4]प्रातरनृतं ते वदन्ति
पुरोदयाज्जुह्वति योऽग्निहोत्रम् ।
[5]दिवाकीर्त्यमदिवा कीर्तयन्त इत्यनुदितहोमं
निन्दित्वा तस्मादुदिते होतव्यम्' ।।

इति उदितहोमः प्रशंसितः ।

यद्वा 'गायत्र्या चाञ्जलिं दत्वा' इत्यनन्तरं तर्पयित्वेति सम्बन्धः । शुक्ले केशवादीन् अन्यत्र सङ्कर्षणादीन् तर्पयित्वेत्यर्थः । न च तर्हि देवादितर्पणात् इत्युक्ति दोषः, 'निपीड्याथ वास' इत्यस्यानन्वयदोषश्चेति शङ्क्यम् । [6]सदशाकमुत्तरीयवस्त्रं -

---

१. उदितहोमिन् इति पाठेन भाव्यम् । २. - - - - - - - - - क.
३. उदित ख. ४. प्रातरमृतं क.
५. दिवा कार्यमादिश्य ६. सार्धशाक ख.

"स्नाने दाने तथा श्राद्धे स्वाध्याये देवतार्चने ।
वध्नीयादम्वरं कट्यां याजुषो वह्वृचं विना ।।"

इति वाक्यरीत्या [1]याजुषैः कट्यां वद्धम् अन्यैः प्रकोष्ठे स्थापितं निष्पीड्य तेन [2]सप्तवाताहतेन देहं प्रक्षाल्याथ वासो विस्तृत्येति पूर्वेणान्वयः । अस्य सङ्क्षेपशास्त्रत्वात् जलतर्पणमिवानुक्तमपि देवादितर्पणं, 'इमं तु वैश्वदेवात् प्राक् ऊर्ध्वं वाऽपि समाचरेत्' इति [3]वाराहोक्तरीत्या -

'मध्याह्ने तर्पणं कुर्यात् पश्चाद् वा प्रातराहुतेः ।
वैश्वदेवान्त्यमथवा कालत्रयमुदाहृतम् ।।'

इति वचनाच्च मध्याह्नस्नानोत्तरं वैश्वदेवानन्तरं वा कार्यतयाऽनुसन्धेयम् ।

*( सन्ध्यात्रयं कर्तव्यम् । तत्राऽपि स्थलभेदेन फलविशेषोपपादनम् )*

सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ।
गायत्री नाम पूर्वी स्यात् सावित्री मध्यमे दिने ।
सरस्वती च [4]सायाह्ने सैव सन्ध्या त्रिषु स्मृता ।
गायत्री तु भवेद् रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ।
प्रतिग्रहान्नदोषात्तु पातकादुपपातकात् ।
गायत्री प्रोच्यते यस्मात् गायन्तं त्रायते यतः ।
सवितृद्योतनाच्चैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री वा वाग्रूपत्वात् सरस्वती ।
गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिकी नद्यां अनन्ता विष्णुसन्निधौ ।
वहिस्सन्ध्या दश[5]गुणा गर्तप्रस्रवणेषु च ।
खाते तीर्थे दशगुणा ह्यनन्ता जाह्नवीजले ।
अनृतं [6]मद्यगन्धं च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं वहिस्सन्ध्या उपासिता ।
उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातस्सन्ध्या त्रिधा मता ।

---

१. याजुषैः इति क कोशे नास्ति । २. सप्तवाताघ्रातेन ख. ३. पुराणोक्तरीत्या क.
४. पूर्वाह्ने क. ५. तोकगुणा ख. ग. ६. मधुगन्धं ख. ग.

उत्तमा सूर्यसहिता मध्यमा लुप्त[1]सूर्यका ।
अधमा ऋक्षसहिता सायं सन्ध्या त्रिधा मता ।
मुहूर्तमुदयादर्वाक् द्विमुहूर्तमतः परम् ।
सन्ध्याकालः स्मृतः पूर्वे विपरीतस्तु पश्चिमे । इति ।

अथ व्याहृतिप्रणवसहितगायत्रीत्रिरुच्चारः प्राणायामः । तथा चाह याज्ञवल्क्यः -

गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम् ।
[2]प्रणवेन च संयुक्तां त्रिरयं प्राणसंयमः ।। इति ।

विस्तरस्त्वन्यत्र ।

आपो हिष्ठा इति ऋक्त्रये, प्रतिपादमादौ प्रणवे सति [3]नव प्रणवा भविष्यन्ति । तद्विशिष्टा ऋच उच्चरन्, कुशादिभिः शिरस्यंसे पादे च प्रोक्षणं मार्जनम् । तदुक्तं ब्रह्माण्डपुराणे -

'नवप्रणवयुक्तेन आपो हिष्ठेत्यृचेन तु ।
संवत्सरकृतं पापं मार्जनान्ते विनश्यति ।
आपो हिष्ठादिभिः पादैश्शिरस्यंशे च विप्लुषः ।
यस्य क्षयाय चाधस्तात् क्षिप्त्वाद्भिः परिषेचयेत् ।
[4]धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता ।
नद्यां वाप्यां ह्रदे वाऽथ [5]भाजने मृन्मये तथा ।
औदुम्बरे च सौवर्णे राजते दारवे जलम् ।
कृत्वाथ वामहस्ते वा सन्ध्योपास्तिं समाचरेत् । इति ।
वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते ।
सा सन्ध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः ।।'

इति निषेधस्तु [6]पात्रान्तरसत्त्वेऽपि वामहस्ते जलं स्थाप्य प्रोक्षणे बोध्यः ।

*( आदित्योदयप्रतिबन्धकरक्षोहननार्थं अर्घ्यत्रयं कालत्रये देयम् )*

**अर्घ्यदानविषये व्यासः -**

१. तारका ख. ग.  २. प्रमाणेन ग.  ३. न वा प्राणा ख.
४. धराच्युतेन ग.  ५. काजले क. ग.  ६. पात्रान्तरासत्वे ग.

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
[१]आदित्याभिमुखस्तिष्ठन् त्रिःक्षिपेत् सन्ध्ययोर्द्वयोः ।
ततः प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुद्ध्यति ।
तिष्ठन्नर्घ्यत्रयं दद्यात् त्रिषु कालेषु वह्वृचः ।
प्रातर्मध्याह्नयोरप्सु सायं तु भुवि निक्षिपेत् ।। इति ।

[२]आदित्योदयप्रतिवन्धकयोर्द्वैत्यानां दाहायाद्भिः अर्घ्यत्रयं दातव्यमित्युक्तं याजुषानुवाके -

'स ह वै देवानाम्' इत्याद्युक्त्वा 'रक्षांसि ह वा पुरोनुवाके । तपोऽग्रमतिष्ठन्त । तान् प्रजापतिर्वरेणोपामन्त्रयत् । तानि वरमवृणीत । आदित्यो नो योद्धा [३]इति । तान् प्रजापतिरब्रवीत् योधयध्वमिति ।

तस्मादुत्तिष्ठन्ते ह वा तानि [४]रक्षांस्यादित्यं योधयन्ति । यावदस्तमन्वागतानि ह वा तानि रक्षांसि गायत्र्याऽभिमन्त्रितेनाम्भसा शाम्यन्ति । तदुह वा आदित्ये ते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्या अभिमन्त्र्य ता आप [५]ऊर्ध्वं प्रक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति। इति ।

तर्हि सन्ध्यायां दीक्षितस्य जीवहत्यादोषः स्यादिति चेत्, न । तन्निवृत्त्यर्थमेव प्रदक्षिणकरणात् । यत्प्रदक्षिणं प्रक्रमन्ति । तेन [६]पाप्मानमवधुन्वन्ति । उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुत इति ।

[७]नन्वेकवारं हतानां प्रतिकालं प्रतिवन्धकत्वाभावात् किं सन्ध्यात्रये अर्घ्येणेति चेत्, मैवम् । तेषां [८]कर्माभिमानिचेतनानामिवायोनिजदेहत्वाद् ब्रह्मणो वराच्च प्रतिदिनं प्रतिकालं चोत्पत्तेः सिद्धान्ते सम्भवात् इति ।

---

१. आदित्यविमुख ग.
२. आदित्योदय इत्यारभ्य अर्घ्यत्रयं इत्यन्तो भागः क. ग. ---
३. भवतु ग. ४. रक्षांसि उदित्यं ख.
५. ऊर्ध्वाधो ग. ६. चात्मानमवधुन्वन्ति ग.
७. नन्वेकं वारं हतानां ग. ८. कर्माभिमानि ख.ग.

अथासने उपविश्य 'आयातु वरदा देवी' इत्यादिना ब्रह्मगायत्रीं प्राणयामन्यासादिपूर्वकमवरपक्षे गायत्रीदशकं जपेत् । *तत्रानुसन्धानविशेषः अन्यत्र छान्दोग्यटीकायां परमगुरोर्गुरुभिर्निरूपितो द्रष्टव्यः* ।

अंव [1]'उदित्यम्' इति मन्त्रेण सूर्योपस्थानं कृत्वा सन्ध्यां समाप्य देवतादितर्पणं कुर्यात् । तदुक्तं -

'आपो हिष्ठेति मन्त्रेण पुनः सम्मार्जनं चरेत् ।
उत्थायार्कं प्रति प्रोक्ष्य गायत्र्या चाञ्चलिं द्विजः ।
आदित्यमण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम् ।
सावित्रीमन्त्ररत्नं तु जपेदष्टोत्तरं शतम् ।
उदित्यमिति मन्त्रेण उपस्थानं समाचरेत् ।
तर्पयेत् मन्त्ररत्नेन [2]शक्त्या देवं जनार्दनम् ।
तदीयांस्तर्पयेत् पश्चात् नित्यमुक्तांस्तथेतरान् ।
आनृशंस्येन भावेन देवादीनपि तर्पयेत् ।
निष्पीड्य स्नानवस्त्रं तु पुनराचमनं चरेत् ।'

( *निर्माल्यविसर्जनमहत्वम्* )

अथ सन्ध्योत्तरं निर्माल्यविसर्जनं कुर्यात् । तथा चोक्तं नारसिंहे -

यः प्रातरुत्थाय विधाय नित्यं
निर्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रता न
[3]नाकालमृत्युर्न च रोगमात्रम् ।।

इति 'विधाय' नित्यं सन्ध्यावन्दनं विधायेत्यर्थः ।

पञ्चरात्रे -

निर्माल्यस्य विलम्बे तु प्रायश्चित्तमथोच्यते ।
अतिक्रान्ते मुहूर्तार्धे सहस्रजपमाचरेत् ।

---

१. उद्युतम् इति मन्त्रेण क. ग.

२. भक्त्या क.



३. न बालमृत्यु ग.

पूर्णे मुहूर्ते सञ्जाते सहस्रं सार्धमुच्यते ।
घटिकाया अतिक्रान्तौ निर्माल्यं शल्यतां व्रजेत् ।
मुहूर्ते समतिक्रान्ते [1]पूर्णं पातकमुच्यते ।
ततः परं ब्रह्मवधो महापातकमुच्यते ।
[2]प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि । इति ।

*( देवादितर्पणतीर्थस्वरूपनिरूपणम् )*

अथ देवादीनां तर्पणतीर्थम् । अङ्गुल्यग्रे देवतीर्थम्, [3]स्वङ्गुल्योर्मूले कायतीर्थमार्षम् । मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं, मूलेऽङ्गुष्ठे ब्राह्मं तेन तीर्थं पिवेत् । यथोक्तं सिन्धुद्वीपे आचमनखण्डे -

विप्रस्य दक्षिणे पाणौ मूलेङ्गुष्ठस्य नित्यशः ।
स्याद् ब्रह्मतीर्थं, मध्ये चाग्नेयाद्या अघनाशनम् ।
मध्ये त्वङ्गुष्ठतर्जन्योः पैत्रं तीर्थं द्विजस्य तु ।
आर्षं कनिष्ठिकामूले [4]कायमग्राङ्गुलीषु वै ।
तीर्थान् विदित्वा पञ्चैतान् ततः कर्माचरेद् द्विजः ।
देवादीन् तर्पयेद् धीमान् उदकाञ्जलिभिः पितॄन् ।

इति योगयाज्ञवल्क्यः ।

'[5]एकहस्तेन तोयेन यः कुर्यात् पितृतर्पणम् ।
पितरो न प्रशंसन्ति न मनुष्या न देवताः ।'

इति च स्मृतिः ।

'उभाभ्यामपि हस्तिभ्यामुदकं यः प्रयच्छति ।
स मूढो निरयं याति देवादीनां तु तर्पणे ।।'

इति वैय्याघ्रपादः ।

श्राद्धे विवाहकालं च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः ।।

इति कार्ष्ण्याजिनः । इत्युभयविधवाक्यप्रावल्यान्यथानुपपत्या इत्थं समाधीयते । [6]आश्वलायनानां सव्यान्वारब्धपाणिना तर्पणम् । तदितरेषां यजुषां अञ्जलिनेति । अत एवोक्तवचनानामन्योन्यविरोधमाशङ्क्य

---

१. तूर्णं क. ग. २. प्रभूते ग. प्रभाते ख. ३. स्वल्पाङ्गुल्योर्मूले क.
४. पायमग्राङ्गुलीषु क. ग. ५. अर्धहस्तेन ग. ६. इदं वाक्यं ख. ग. कोशयोर्न विद्यते ।

विरोधपरिहारमाह मदनः - एकहस्ततर्पणनिषेधवचनं याजुषपरम् । अञ्जलिनिषेधवचनमाश्वलायनपरमिति । इदमेव युक्तं जानीमः । अन्यथोभयविध [1]वचनविरोधपरिहारोपायाभावात् । [2]ऋक्शाखिनामुक्ततर्पण प्रकारस्य परम्पराप्रमितत्वाच्च । तरङ्गिणीरामाचार्यप्रभृतयोऽपि एवमेव निवन्धेषु समर्थितवन्तः ।

*( तर्पणयोग्यपात्राणि )*

तर्पणपात्रविशेषाणि -

राजतैर्भाजनैरेषामथ वा राजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते ।।

इति मनुः । 'राजतान्वितैः' खड्गमृगपात्रादिभिरित्यर्थः ।

अथ वेदादीनामाद्यन्तोच्चारणपुरस्सरं सव्येन देवान् ऋषीन् [3]अर्यमादीन् प्राचीनावीतिना पाणिना स्वस्वशाखानुसारेणाञ्जलिना[4]ऽन्वारब्धपाणिना वा तर्पयित्वा वामाङ्गुष्ठमूले [5]अलोमकप्रदेशे तिलान् धारयित्वा दक्षिणतर्जन्यङ्गुष्ठमध्यदेशेन तिलानुद्धृत्य पितृंस्तर्पयेत् । गेहे चेदुद्धृतजलेन क्रियते, तदा जले तिलान् मिश्रयित्वेति । तथा चाह याज्ञवल्क्यः -

ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत् ।
जप्त्वाऽथ प्रणवं चापि ततस्तर्पणमाचरेत् ।
ये च पाणितले स्पृष्टाः रोमकूपे तु ये [6]धृताः ।
तैस्तिलैस्तर्पणं कुर्वन् पितृघाती भवेद् द्विजः ।।
तस्मात्ते मणिवन्धे तु ग्राह्या विप्रैस्समाहितैः ।
[7]यद्युद्धृतेन क्रियते तिलान् संमिश्रयेज्जले ।
अतोऽन्यथा चेत्सव्ये तु तिला ग्राह्या विचक्षणैः ।

इति । अन्यथा [8]अनुद्धृते । उद्धृतोदकेन तर्पणं क्रियते चेत् तज्जलमध्ये तिलान् मिश्रयेत् । नद्यादौ क्रियते चेत् वामहस्ते तिला ग्राह्या इत्यर्थः ।

तर्पणाञ्जलिनियमाः - व्यासः -

---

१. वचनपरिहार क. ख. २. ऋक्शाखिनाम् इति ख कोशे नास्ति ।
३. आर्यादीन् क. ४. प्रारब्ध ख. ५. लोकप्रदेशे ख. ६. हताः ग.
७. इदं वाक्यं ग कोशे नास्ति । ८. अभिद्रुते ग.

'एकैकमञ्जलिं [1]देवाः द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रीन् त्रीन् स्त्रियश्चैकैकमञ्जलिम् ।।'

इति ।

( *सांवत्सरश्राद्धदिने तर्पणविचारः* )

सांवत्सरश्राद्धे [2]ब्रह्मयज्ञाङ्ग नित्यतर्पणं याजुष आदौ, बह्वृचस्त्वन्ते तिलव्यतिरेकेण नित्यतर्पणं कुर्यादित्यत्र स्मृतयः -

[3]श्राद्धादौ याजुषः कुर्युः अन्ते बह्वृचसामगाः ।
ब्रह्मयज्ञं ततः कुर्युस्तर्पणं तु तिलैर्विना ।
सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात् स भवेत् पितृघातकः ।।

इति स्मृतिरत्नावल्याम् ।

'पितृश्राद्धे तु सम्प्राप्ते जलैः कुर्याद् विधानतः ।
सर्वेषां तर्पणं चैव इति शातातपोऽब्रवीत् ।।'

गार्ग्यः -

नैव श्राद्धदिने कुर्यात् तिलैस्तु पितृतर्पणम् ।
श्राद्धं [4]कृत्वा अपराण्हे वा तर्पणं तु तिलैः सदा ।। इति

तत एव -

पित्रोः क्षयाहे सम्प्राप्ते यः कुर्यान्नित्यतर्पणम् ।
आसुरं तद् भवेद् श्राद्धं तत्तोयं रुधिरं स्मृतम् ।।

इति वचनं तिलसहिततर्पणविषयम् । ऋक्शाखिनां प्राक्तर्पणविषयं वा । [5]परेऽहनि तर्पणं तु परेद्युरेवेति सर्वशाखिनां समम् ।

यस्तर्पयति तान् प्रातश्श्राद्धं कृत्वा परेऽहनि ।
पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम् ।
निषिद्धेऽपि दिने कुर्यात् तिलयुक्तं तु तर्पणम् ।
अमृतं तु भवेत् प्रातः मध्याह्ने [6]क्षीरिवद् भवेत् ।

---

१. देवीः क. २. ब्रह्मयज्ञतर्पणं ख. ३. श्राद्धे द्वे ग. ४. कुर्यात् परेह्ने वा ख.
५. ननु श्राद्धतर्पणं नित्यतर्पणात्प्रागेवेति सम्मतं सर्वत्र इति ख कोशे विद्यते ।
६. क्षारवद् भवेत् क.

अपराह्णे भवेत्तोयं सायाह्ने रुधिरं भवेत् ।
श्राद्धाङ्गतर्पणं ह्येतत् मध्याह्ने नित्यतर्पणम् ।
सङ्कोचे तीर्थलाभे वा प्रातरप्याचरेत्तु तत् ।
[1]दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
शर्वर्याः प्रथमे यामे दिवावत्कर्म कारयेत् ।
ब्रह्मयज्ञं च सौरं च न कुर्यात्तिलतर्पणम् ॥

इति वाराहे ।

विमोकश्राद्धे परोऽहनि तिलतर्पणं प्रतिषिद्धं क्षीरस्वामिनिबन्धे । नारदीये -

वृद्धिश्राद्धे सपिण्डे च प्रीतिश्राद्धेऽनुमासिके ।
संवत्सरविमोके च न कुर्याच्छ्राद्धतर्पणम् ।

इति । [2]सकृन्महालयश्राद्धे प्रतिसांवत्सरिकश्राद्धस्येव परेऽहन्येव तिलतर्पणम् । नित्यमहालयश्राद्धे तद्दिन एव श्राद्धाङ्गतर्पणम् । 'पक्षश्राद्धं यदा कुर्यात् तर्पणं तु दिने दिने।' इति वचनात् ब्रह्मयज्ञाङ्ग [3]नित्यतर्पणं तु स्वस्वशाखाभेदेनादौ अन्ते वा कुर्यात् । अमावास्यायां तु पूर्वमेव श्राद्धाङ्गतर्पणम्।

'दर्शे तिलोदकं पूर्वं पश्चाद् दद्यात् महालये ।
सकृन्महालयश्राद्धे परेऽहनि तिलोदकम् ॥'

इति स्मृतिः ।

ननु श्राद्धाङ्गतर्पणं नित्यतर्पणेन पृथगेवेति तावत्सम्मतं सर्वत्र । तथा चामावास्यायां तर्पणद्वयं प्रसज्यत इति चेत्, मैवम् । अमावास्यायां श्राद्धे यदि पूर्वदिने सायं [4]ब्राह्मणनिमन्त्रणार्थं श्राद्धसङ्कल्पः कृतः, अमावास्यायां प्रातर्वा। तदा श्राद्धप्रयोगस्यारब्धत्वात् ब्रह्मयज्ञाङ्गतर्पणेनैव श्राद्धाङ्गभूतं तत्पूर्वभावि तर्पणं च तद्दैवत्यं [5]तन्त्रेण प्रसङ्गेन सिद्ध्यति । तदन्तःपातित्वात् समानकर्तृत्वाच्च। एवं चामावास्यायां तिलतर्पणद्वयं न भवति । यदि त्वसम्पत्त्या ब्रह्मयज्ञात्पूर्वं श्राद्धकरणं न सङ्कल्पितं तदा ब्रह्मयज्ञाङ्गतर्पणोत्तरं श्राद्धकरणे सङ्कल्पिते

---

१. दिवातीतानि ख. ग. २. वृद्धिश्राद्धे क.

३. नित्येति ग कोशे नास्ति ।

४. ब्रह्मणो मन्त्रणार्थं ग. ५. तन्त्रेण ख.

श्राद्धाङ्गतर्पणं पृथक्कार्यम् । पूर्वेण श्राद्धप्रयोगानन्तर्भूतेन तदङ्गतर्पणाऽसिद्धेरिति[1] ।

विवाहादिमङ्गलोत्तरं संवत्सरपर्यन्तं शुक्लैस्तिलैः तर्पणं कुर्यादेव । सर्वथा तिलाभावस्य निषिद्धत्वात् । रामायणे -

पादशौचमनभ्यङ्गं तिलहीनं तु तर्पणम् ।
तत्सर्वं त्रिजटे तुभ्यं यच्च श्राद्धमदक्षिणम् ।। इति ।

तत एव -

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं च [2]नेत्येके तिलतर्पणम् ।।

इति वचनं कृष्णतिलतर्पणाभावविषयम् ।

( *तिलतर्पणनिषेधः* )

तिलतर्पणनिषेधो वाराहे -

ब्रह्मयज्ञं प्रकुर्वीत प्रत्यहं तिलतर्पणम् ।
पितॄनुद्दिश्य पित्रादीन् निषिद्धदिवसं विना ।
भानुवारे भौमवारे नन्दाभृगु [3]मघासु च ।
त्रयोदश्यां च सप्तम्यां भरण्यां कृत्तिकासु च ।
अयनद्वितये चैव चतुर्ष्वपि युगादिषु ।
गृहे मृताहे जन्मर्क्षे सन्ध्ययोश्च तथा निशि ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।
निषिद्धदिवसे वारे नक्षत्रे च तथा तिथौ ।
यस्तिलैस्तर्पणं कुर्यात् तज्जलं रुधिरं भवेत् ।
तीर्थे तिथिविशेषे च प्रेतकार्ये तथैव च ।
प्रेतपक्षे व्यतीपाते सङ्क्रान्तौ वैधृतावपि ।
निषिद्धेऽपि दिने कुर्यात्तिलयुक्तं तु तर्पणम् ।

इति उत्सर्गापवादयोरुक्तेस्तद्विवाहे चोपनयने इत्यप्युत्सर्ग एवेति वा ।

---

१. ननु इत्यारभ्य तंदङ्गतर्पणासिद्धेः इत्यन्तो भागः ख कोशे नास्ति ।
२. नेत्येके ग.  ३. मघासु क.

जीवत्पितृकस्य [1]प्रमीतमातृकस्य नित्यतर्पणाभावेऽपि श्राद्धाङ्गतर्पणमस्त्येव । प्रधाने अधिकारस्य [2]सत्वेनाप्रधानाधिकारस्य न्यायप्राप्तत्वादिति केचित् ।

तन्न वुध्यामहे ।

'ताते जीवति पुत्रस्तु यदि माता प्रमीयते ।
पिण्डनिर्वापणादूर्ध्वं न कुर्यात्तिलतर्पणम् ।
न जीवत्पितृकः कुर्यात् मातुरुद्दिश्य तर्पणम्' ।।

इति नारदीयोक्तेः ।

*( औपासनप्रकारः )*

तर्पणानन्तरं प्रातरौपासनमनुसन्धेयम् । तत्प्रकारस्तु - अग्निं प्रज्वाल्य तिथ्यादि स्मृत्वा स्वस्वशाखोक्तरीत्या प्रोक्षणादि कृत्वा 'सूर्याय स्वाहा' 'प्रजापतये स्वाहा' इति प्रातर्जुहुयात्। [3]एवं सायं सूर्यपदस्थाने अग्निपदप्रक्षेप इति । 'स्वयं होमे फलं यत् स्यात् तदन्येन न लभ्यते' इति स्मृतेः, होमे स्वयं मुख्यः ।

स्वस्यास्वास्थ्ये त्वाह कूर्मे -

'ऋत्विक् पुत्रोऽथवा पत्नी शिष्यो वाऽपि सहोदरः ।
प्राप्यानुज्ञां [4]विशेषेण जुहुयाद् वै यथाविधि' ।। इति

आहिताग्नेस्तु विशेषः -

'निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत् कार्यवान् विप्रो [5]वृथैव न चिरं वसेत् ।
[6]विहायाग्निं सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ।
असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिभिः ।
द्वयोरप्यसमक्षं चेद् भवेद् हुतमनर्थकम् ।
प्रोषिते तु यदा पत्यौ पत्नी ग्रामान्तरं व्रजेत्।
होमकाले यदा प्राप्ता सा दोषेण न युज्यते ।

१. प्रेतमातृकस्य ग. २. सत्वे अङ्गाधिकारस्य ग. ३. इदं वाक्यं ग कोशे न विद्यते ।
४. विशेषे न ख. ५. वृथा वा ख. ६. विवाहाग्निं ग.

इति शौनकीये । ७. ८. ९. ।

## २. प्रकाशिका

सिंहावलोकनन्यायेनाह - 'अञ्जसा । अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत्' इत्यादिना 'वाग्यतः सर्वदा जपेत्' इत्यन्तेन । प्रातरर्घ्यानन्तरं परिक्रम्य नारायणं ध्यात्वैव गायत्रीं जपेदित्यर्थः । सहस्रसंख्या परमा यस्याः सा तथा । शतसख्या मध्यमा यस्याः सा तथा । दशसंख्या अवरा यस्याः सा । तथा देवीं गायत्रीं सूर्यदर्शनं मर्यादीकृत्य स्थित्वैव जपेत् इत्यर्थः । सूर्यदर्शनानन्तरं उपविश्य स्थित्वा वा उभयथाप्यदोषात् इत्यर्थः।

नक्षत्र [१]भूषितकाले प्रातः सन्ध्या कर्तव्या । किञ्चिद्दिवाकरसहिते काले, 'उत्तरा' - सांयन्तनी । सायंकाले गायत्रीजपस्तु उपविश्यैव कर्तव्यः । ७. ८. ।

गायत्रीध्यानमाह - *ध्येय* इति । आदित्यमण्डले [२]सूर्यः । तत्र मुख्यप्राणः । तत्र नारायणः । छान्दोग्यभाष्ये तृतीयप्रपाठके तथा उक्तत्वात् अन्यत् स्पष्टम् । ९ ।

## ३. तन्त्रदीपिका

एवमासनमभिधायानन्तरमाह - *अर्कमण्डलगमिति* । अत्र केचित् - 'त्रिपदां जपेत्' इति पाठः । '[३]त्रिपदा गायत्री' इति श्रुतेः । टाप्टचि इति सूत्राच्च । 'त्रिपदीम्' इति पाठस्य मूलं मृग्यमिति वदन्ति । बृहदारण्यकभाष्ये 'एकपदी' 'द्विपदी' इति गायत्र्यां व्यवहारदर्शनात् ।
जपसङ्ख्यामाह - *सहस्रपरमाम्* इति ।

### ( *प्राणायामप्रकारः* )

एवं प्राणायामपूर्वकं जपः कर्तव्यः ।

---

१. भूषणकाले क. २. सूर्यमुख्यप्राणौ ख.

३. तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् इति पादत्रयसहिता गायत्री 'त्रिपदा' इत्यभिधीयते ।

'प्राणायामत्रयं कुर्यात् सन्ध्याहोमजपादिषु ।
अगर्भश्च सगर्भश्च प्राणायामो द्विधा मतः ।
[1]अगर्भो ध्यानहीनस्तु सगर्भो ध्यानसंयुतः ।
अगर्भात् कोटिगुणतः प्राणायामस्सगर्भकः ।'

इति । तथा -

दक्षिणे रेचकं कुर्यात् वामेनापूरितोदरः ।
कुम्भके च जपं कुर्यात् प्राणायामस्त्रिलक्षणः ॥

इति च ।

'सव्याहृतिकाः सप्रणवा प्राणायामास्तु षोडश ।
अपि [2]भ्रूणहणं वाऽपि पुनन्त्यहरहः कृतम् ।
दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः ।
मुच्यते ब्रह्महत्यायाः किं पुनश्चोपपातकैः ।
सव्याहृतिकां [3]सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ।'

इति व्यासस्मृतिः ।

एवं प्राणायामध्यानानि कृत्वा सङ्ख्यापूर्वं जपमाचरेदित्यर्थः ।

*(शङ्खमण्यादिभिः जपसङ्ख्याने फलभेदः)*

असङ्ख्यातात्तु सङ्ख्यातो सहस्रगुण उच्यते ।
अङ्गुलीजपसङ्ख्याने एकमेकं वरानने ।
[4]पर्वैर्दशगुणं प्रोक्तं पुत्रजीवफलैर्दश ।
शतं वै शङ्खमणिभिः प्रवाळैश्च सहस्रकम् ।
मौक्तिकैर्दशसाहस्रं सौवर्णैर्लक्षमेव च ।
तुलस्यास्त्वनन्तकं प्रोक्तं फलमेवं न संशयः ।

इति । तथा भारते -

अरण्यात्तुलसीकाष्ठान्मणिं कृत्वा तु हस्तयोः ।
बाह्वोर्मध्ये च कण्ठे च मणिबन्धद्वये तथा ।
प्रातःकाले नरो [5]धृत्वा गायत्रीं सम्यगभ्यसेत् ।

---

१. सगर्भो क. २. भ्रातृहनं ख. ३. सप्रणयाम् ख. हत्वा क.

प्राप्नोति ब्रह्मणः स्थानं एकेनापि न संशयः ।
ततो मध्याह्नसन्ध्यायां माघस्नानेषु नित्यशः ।
सायंकाले नरो धृत्वा दलं वा तुलसीमणिम् ।
सौरं पदमवाप्नोति गायत्र्या मुनिसत्तम । इति ।

तथा -

तुलसीकाष्ठमणिभिः धात्रीमणिसमन्वितैः ।
तथा [1]पद्माक्षिमणिभिः सहस्रैरुपशोभितम् ।
पञ्चमालां च यः कृत्वा जपकाले धरेद् द्विजः ।
तस्य पुण्यफलं वक्तुं नाहं शक्तोऽस्मि नारद । इति ।
वामेन न स्पृशेद् मालां करेण ब्राह्मणः क्वचित् ।
तथान्यमन्त्राणि न जपेदनया चाक्षमालया ।
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् । इति ।

तथा सङ्ग्रहे -

[2]सङ्ख्याहीनं तु यज्जप्तं यज्जप्तं नियमान् विना ।
अन्यासक्तेन यज्जप्तं तज्जप्तं निष्फलं भवेत् । इति ।

तथा -

कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ ।
मध्ये स्कन्धभुजाभ्यां तु जप एवमुदाहृतः ।।
पर्वभिर्गणयेद् देवीं नाक्षमालादिभिः क्वचित् ।

इत्यादि च [3]नियतजपमालानिषेधपरमिति ज्ञेयम् ।

तथा च सहस्रसङ्ख्या परमा यस्यां तां गायत्रीं प्ररमां विद्यात् । शतमध्यां विद्यात् । दशावरां विद्यात् इत्यर्थः । ८ ।

अथ तन्नियममाह - *आसूर्यदर्शनात्* इति । तिष्ठेदिति नियमसूचनम् । तत्र कालमाह - [4]पूर्वमिति ।

---

१. पक्षादि क.

२. साङ्ख्यविहीनः ख.

३. नियतजपेति क कोशे नास्ति ।

४. पूर्वम् ख.

अत्र प्रातर्माध्याह्निकसायंसन्ध्यावन्दनानां अयं क्रमो ज्ञेयः - 'सनक्षत्राम्' इति प्रातः सन्ध्यावन्दनोक्तिः । उत्तराम् इति माध्याह्निकोक्तिः । 'सदिवाकराम् उत्तराम् उपविश्य' इति सायंसन्ध्यावन्दनोक्तिः । [1]अन्यथा उत्तराम् इति द्विरुक्तिवैयर्थ्यात् । अत्र 'वाग्यतः सर्वदा जपेत्' इति स्थलत्रयेऽपि सम्बध्यते ।

उपसंहारेऽपि ध्यानस्य कर्तव्यत्वात् पूर्वं ध्यानप्रकारमाह - *ध्येयः सदा* इति । अत्र सरसिजं पद्मं तदासनः । 'पद्मासनः [2]पद्मकरो' इति सूर्यध्यानात् । अत्र सरसिजासनो व्रह्मा तस्मिन्निविष्ट इति केचित् । अथवा सरसिजा लक्ष्मीः तया सह आसने सन्निविष्टः, लक्ष्मीसमेत इत्यर्थः । अथवा कुक्कुटाद्यनेकासनेषु, 'सरसिजासन' इति पद्मासने उपासना [3]विशेपाभिधानं वा । 'हिरण्मयवपुः' विलक्षणानन्दात्मकदेह इत्यर्थः । 'हिरक् सुखं हिरण्यं स्यात् जीवानन्दात् पृथक् यतः' इति वचनात् ।

अत्र 'धृतशङ्खचक्र' इति वाहुद्वयमेव ज्ञायते । 'प्रोद्यदादित्यवर्णश्च' इति ध्यानान्तरे वाहुचतुष्टयम् । अत्र केचित् - [4]यत्तच्छब्दाध्याहारेण ध्यातुः पुरुषस्याङ्कस्थदोर्द्वयत्वाभिधानान्न दोष इति वदन्ति । आश्वरोऽथिके पर्वणि सन्ध्याप्रकरणे -

ऊर्ध्ववाहुस्ततो भूत्वा सूर्यमीक्षेत् समाहितः ।
तन्मण्डलस्थमाध्यायेत् तेजोमूर्तिं चतुर्भुजम् ।।
शङ्खचक्रगदापद्मधारिणं [5]वनमालिनम् ।
उद्युतं च जपेन्मन्त्रान् ततश्च सुसमाहितः ।।

इति चतुर्वाहुत्वमुक्तम् । तत्र 'अङ्कस्थदोर्द्वयम्' इति विशिष्याभिधानात् अङ्के करद्वयं निधाय शङ्खचक्रमात्रं धारयति सूर्यान्तर्गतनारायण इति केचित् ।

'चक्रशङ्खधरोऽङ्कस्थ' इत्यत्रासमासादङ्कस्थोत्तानपाणिद्वयश्चक्रशङ्खधारी च । आयुधचतुष्टयाभिधानं [6]त्वनुदयकालाद्यभिप्रायेणेति सम्प्रदायः ।

'ध्येयः सदा' इत्यत्र तु किञ्चिद् भाति । 'नारायण' इत्युक्तेः नारायणस्य तन्त्रसारादौ चतुर्वाहुत्वोक्तेरेतद्ध्यानस्योत्तरार्धेन भवितव्यम् इति ।

---

१. इदं वाक्यं क कोशे नास्ति । २. पद्माकरो ख. ३. विशेषणाभिधानं वा क.
४. यच्छब्दा ख. ५. वनमालिनम् क. ६. त्वनूद्य ख.

अथवा 'मन्त्रेष्वेतेषु सर्वेषु '[1]द्वाद्यनन्तान्तवाहुकः' इति वचनात्तत्तत् योग्यतानुसारेण द्विवाहुत्वाद्युक्तिरित्यदोषः । ७. ८. ९. ।

*सदाचारस्मृतिः*

*( गायत्र्यादिमन्त्रजप - हरिपूजादिक्रमनिरूपणम् )*

गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।
एवं सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद् हरिम् ।। १० ।।

*१. आह्निककौस्तुभः*

अथ गायत्रीमन्त्रो ऋषिभेदात् [2]ध्यानभेदाच्च द्विविधः । यथोक्तं तन्त्रसारे - 'विश्वामित्रस्तु सन्ध्यार्थे तदन्यत्र प्रजापतिः' इति। तत्र 'सन्ध्याङ्गायास्तु गायत्र्या त्रिगुणो मूलमन्त्रकः' इति प्रमाणानुसारेण [3]'सन्ध्याङ्गगायत्रीत्रिगुणमष्टाक्षरं इत्याह - *गायत्र्या* इति । सन्ध्याङ्गगायत्र्याः त्रिगुणं यथा स्यात् तथा नारायणाष्टाक्षरं जपेत्। 'उद्यत् भास्वत्' इत्युक्तप्रकारेण विष्णुं ध्यायन्नेवोपांशु पठेदित्यर्थः । यथाह विश्वामित्रः -

'उत्तमं मानसं जप्यमुपांशु मध्यमं स्मृतम् ।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ।
[4]वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जाप्यं [5]तद्धीनमफलं स्मृतम् ।।' इति ।

---

१. द्युवाद्यनन्त क.

२. ध्यानभेदात् इति ख कोशे नास्ति । ३. सन्ध्यागायत्री क. ४. वस्त्रमाच्छाद्य क.

५. तद्धीनमिति । अत्र विशेषः स्मृतिमुक्तावल्यां श्रीमद्भिः कृष्णाचार्यैर्निरूपितोऽनुसन्धेयः। यथा -

कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ । मध्ये स्कन्धभुजाभ्यां तु जप एवमुदाहृतः ।।
अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चितौ करौ । अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः।।
अधोहस्तं च पैशाचं मध्यहस्तं तु राक्षसम् । बद्धहस्तं तु गान्धर्वमूर्ध्वहस्तं तु दैवतम् ।।
यदि स्यादार्द्रवासा वै वारिमध्यगतो जपेत् । अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ।।
अङ्गुलीजपसङ्ख्यातमेकमेकं वरानने । पर्वभिर्द्विगुणं प्रोक्तं पुत्रजीविफलैर्दश ।।
शतं वै शङ्खमणिभिः प्रवालैश्च सहस्रकम् । मौक्तिकैर्दशसाहस्रं सौवर्णैर्लक्षमेव च ।।

कुशग्रन्थ्या कोटिगुणं तुलस्यानन्तकं फलम् । तुलसीमणिना चैव गुणितं चाक्षयं फलम् ।।

*( सूतके - मृतके च सन्ध्याक्रमः )*

**सूतके सन्ध्यादिकर्मसु विशेषमाह भारद्वाजः -**

**सूतके मृतके वाऽपि प्राणायाममन्त्रकम् ।**
**तथा मार्जनमन्त्रास्तु मनसोच्चार्य मार्जयेत् ।**
**गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।**
**मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ।। इति ।**

---

**अथ अक्षमालाजपक्रमः -**

अक्षमालाजपे सम्यक् प्रकारोऽथ निरूप्यते । अष्टोत्तरशतं माला उत्तमा सा प्रकीर्तिता ।।
चतुःपञ्चाशतं तत्र मध्यमा सा प्रकीर्तिता । अधमा प्रोच्यते माला सप्तविंशतिसम्भवा ।।
उत्तमेषु च मध्येषु भोगमोक्षप्रदेषु च । अष्टोत्तरशतायां तु मालायां जपमाचरेत् ।।
चतुःपञ्चाशतायां वा नाधमायां कदाचन । मुखमारभ्य पृष्ठान्तं जप्त्वा पश्चात् प्रदक्षिणम् ।।
भ्रामयित्वा पुनर्वक्त्रं प्रारभ्यं जपमाचरेत् । अयमेव समाख्यातो जपमालाजपक्रमः ।।
वामेन न स्पृशेत् मालां करेण ब्राह्मणः क्वचित् । करे पृष्ठे तथाङ्गुष्ठे धारयेन्न कदाचन ।।
अन्यमन्त्राणि न जपेदनया चाक्षमालया । मध्यमानामिकाङ्गुष्ठैर्गृहीत्वा जपमाचरेत् ।।
अङ्गुष्ठतर्जनीभ्यां तु मालाकर्पस्तु मध्यमः । कनिष्ठाङ्गुष्ठयोगेन कनिष्ठा सिद्धिकारिणी ।।
अक्षमाला प्रगोप्तव्या जपकाले तु मेधसा । पददृष्टिगता माला निष्फला जपकर्मणि ।।
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् । उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ।।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति । अथाङ्गुल्या जपे चैव प्रकारश्चाऽपि कथ्यते ।।
मध्यमानामिकामध्यं मेरुद्वितयकल्पितम् । मेरुं प्रदक्षिणीकुर्वन् अनामीमूलपर्व तु ।।
आरभ्य मध्यमामूलं पर्वान्तं गणयेत्क्रमात् । आरभ्यानामिकामध्यं कनिष्ठादिक्रमेण तु ।।
तर्जनीमूलपर्यन्तं करमाला विधीयते । पर्वद्वयं मध्यमयोर्जपकाले विवर्जयेत् ।।
अष्टोत्तरशतं कुर्यात् चतुःपञ्चाशतं तथा । सप्तविंशति कार्याणि न ततो न्यूनमाचरेत् ।।
सङ्ख्याहीनं तु यज्जप्तं तत्सर्वं निष्फलं भवेत् । मनःप्रहर्षणं शौचं मौनं मन्त्रार्थचिन्तनम् ।।
अव्यग्रत्वमनिर्देशो जपसम्पत्तिहेतवः । निष्ठीवजृम्भणक्रोधनिद्रालस्यक्षुधामदाः ।।
पतितश्वान्त्यजालोका दशैते जपवैरिणः । न प्रक्रमन् न च हसन् न पार्श्वमवलोकयन् ।।
नापाश्रितो न जल्पंश्च न प्रावृतशिरस्तथा । न पदा पदमाक्रम्य न चैव हि तथा करौ ।।
न चासनाहितमना न च संश्रावयन् जपेत् । होमः प्रतिग्रहो दानं भोजनाचमने जपः ।।
वहिर्जानु न कार्याणि साङ्गुष्ठानि समाचरेत् । जपकाले न भाषेत होमादिषु कथञ्चन ।।
सङ्ख्ययैवोपवीतेन जपहोमादि निष्फलम् । मौनादेर्व्याधिनाशः स्यात् जपादिषु कथञ्चन ।।
व्यवहरेद् वैष्णवं सूक्तं स्मरेद् वा विष्णुमव्ययम् । एतेष्वेवावसक्तस्तु यथा गच्छेद् द्विजोत्तमः ।।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् ।। इत्यादि

अत्र कश्चित् [1]'सूतकिनामपि दशवारं जप्यम् । 'आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद् दश' इति आश्वलायनोक्तेः । आपन्नः आपद्ग्रस्तः अशुचिः आशौचवान् इत्यर्थः । तत्तु आचारविरुद्धत्वादुपेक्ष्यम् ।

*( गायत्रीजपस्तु पर्वस्वेव नाक्षमालादिना )*

'वेदमाता तु गायत्री वेदः पर्वसु गीयते ।
पर्वभिश्च जपेन्नित्यं [2]न मालाभिः कथञ्चन ।'

इति स्मृतेः महदाचाराच्च सन्ध्याङ्गगायत्र्याः पर्वभिरेव जपः ।

'तुलसीकाष्ठमणिभिः [3]निर्मितां तु प्रयत्नतः ।
गायत्र्यादिजपं कुर्यात् अन्यथा निरयं व्रजेत् ।।'

इति तु ब्रह्मगायत्रीपरम् ।

राष्ट्रक्षोभे नृपक्षोभे [4]रोगार्ते च महापदि ।
सन्ध्यावन्दनविच्छित्तिः सूतकेऽपि न दोषकृत् ।
कालत्यागे शतं कुर्यात् सन्ध्यात्यागे शतत्रयम् ।।

'यदाधीध्य' इति मन्त्रेण' इति च स्मृतिः ।

*( विष्णुपूजापद्धतिमाह )*

एवमौपासनाद्यनन्तरमाह्निकं वक्तुं देवादीनां अभिवादनपूर्वकं विष्णुपूजाप्रकारमाह - *प्रणम्येति* । [5]देवान् ब्रह्मादीन् । विप्रान्, हरिपार्षदान्

---

१. सूतानामपि ख. २. नाक्षमालां ख. ३. विहितां क. ४. रोगवार्ते क.

५. *देवान् ब्रह्मादीनिति* । अत्रेदं विचिन्तनीयम् । ब्रह्मादयो देवाः विष्णुपरिवारत्वेनैव पूज्याः । तदुक्तमनुव्याख्याने - (३.४.२२८.)

लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्राङ्गिरस्सुताः ।
सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ।। इति ।

तत्रैव चान्यत्र -

परिवारतया ग्राह्या अपि हेयः प्रधानतः । इति ।

विष्णोः पुरतः प्राण-गरुड-शेषप्रतिमा विहाय अन्यप्रतिमा पूजार्थं न स्थापनीयाः । तदुक्तं पाद्मे -

विष्णोश्च पुरतो नैव ह्यन्यस्य प्रतिमां यजेत् ।
वर्जयित्वा हनुमन्तं शेषं गरुडमेव च ।। इति ।



रुद्रलिङ्गार्चनादौ लिङ्गमस्तकोपरि शालग्रामादिकं विन्यस्य प्राधान्येन विष्णोरेव पूजा क्रियते.

हरिप्रियान् । गुरून् विद्योपदेष्ट्रॄन् जनकांश्च । प्रणम्य प्रकर्षेण तारतम्यानुसारेण नत्वा । एवं सर्वत्र सर्वोत्तमं हरिं ध्यायन्नेव विष्णुं सर्वत्र निविष्टमर्चयेत् त्रिकरणशुद्ध्या पूजां कुर्यात् इत्यर्थः ।

---

इत्यनुसन्धाय परिवारतयैव रुद्राद्याः पूज्याः । न स्वातन्त्र्येण ।

उक्तं च सङ्ग्रहे -

अङ्गत्वेनैव सम्पूज्या विष्णोराराधने सुराः ।
इन्द्राद्या लोकपालाश्च पूर्वे साध्या मरुद्गणाः ।
रक्षकान्तरबुद्ध्या च स्वातन्त्र्येणाऽपि देवताः ।
नार्चयेद् सर्वदा विप्रः परमापद्गतोऽपि वा ।
तस्मात्तु तात्विकान् देवान् अङ्गत्वेनैव पूजयेत् ।

हारीतस्मृतावपि -

तस्मादावरणं हित्वा ये यजन्तीतरान् सुरान् ।
ते यान्ति नरकं घोरं कल्पकोटिशतानि वै ।। इति

स्कान्देऽपि -

शुद्धानामपि देवानां या स्वतन्त्रार्चनक्रिया ।
सा दुर्गतिं नयत्येव वैष्णवान् वीतकिल्बिषान् ।
अर्चयित्वा जगन्नाथं वैष्णवः पुरुषोत्तमम् ।
तदावरणरूपेण यजेद्देवान् समन्ततः ।
विष्ण्वावरणरूपेण पूजयेदर्चयेत् सुरान् ।
ब्रह्मरुद्रौ तथा सूर्यमिन्द्रं चन्द्रादिकान् सुरान् ।
विष्णोरावरणं हित्वा पूजको नरकं व्रजेत् ।। इति ।

ब्राह्मे च -

तदावरणरूपेण पूजयेदर्चयेत् सुरान् ।
मां वा शिवं वा सूर्यं वा हरेरावरणं विना ।
यस्तु सम्पूजयेद् विप्रः स पाखण्डी भवेद् ध्रुवम् ।।

भद्रकाल्यादीनां तामसदेवतात्वमुक्तम् । यथा -

भद्रकाली गणेशश्च कूश्माण्डा भैरवादयः ।
मद्यमांसाशिनश्चान्ये तामसाः परिकीर्तिताः ।।

अत्रेदमवधेयम् । यदि गणपत्यादयो मद्यमांसाशिन इति केचिद् विभावयन्ति भणन्ति चेत् स्मृतयः तर्हि वक्तारस्तामसाः विधायकाः स्मृतयोऽपि तामसा इत्येवावगन्तव्यम् । अनेन तामसग्रन्थोक्तक्रमेणैव गणपत्यादिपूजा प्रतिषिद्धेत्यवगन्तव्यम् । न तु कार्त्स्न्येन । तन्त्रसारोक्तक्रमेण

प्राणायावाहनेन यद्यन्तर्यामितया प्राधान्येन हरिः पूज्यते तदधीनतया च सुराः तर्हि तादृशी पूजा शास्त्रसम्मतैव भवति ।

एवं नैवेद्यदानेऽपि रहस्यमनुसन्धेयम् - भगवान् करुणासमुद्रः भक्तैः श्रद्धया साधितं परमान्नादिकं दययैव स्वीकरोति । तत्र क्रमस्तूक्तः ऐतरेयभाष्ये - (१. २.)

अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः ।
मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ।।

विवृतोऽयमर्थः पूजाकल्पलतायाम् -

यथा प्रजाभिरानीतम् उपायनं राजा स्वीकृत्य त्रेधा विभज्य उत्तमं स्वयं गृहीत्वा मध्यमं भार्यायै दत्वा अधमं पुत्रादिभ्यो ददाति । एवं भगवानपि भक्तैः समर्पितं नैवेद्यं स्वीकृत्य त्रेधा विभज्य उत्तमं स्वयं गृहीत्वा मध्यमं रमायै दत्वा अधमं ब्रह्मादिभ्यो ददाति ।

इयांस्तु विशेषः - रमायै मध्यममाघ्राय ददाति । ब्रह्मादिभ्यः अधमं दृष्ट्वा स्वीकृत्य ददातीति । उक्तं च -

प्राणेन्द्रियेण सम्भुक्तशेषं तस्यास्समर्पयेत् । इति ।

तथा -

आस्वादितं तु हरिणा विमलैश्शुभदृष्टिभिः ।
तत्सर्वं प्रार्थयेत्तेषां तारतम्यक्रमेण तु ।। इति वचनात् ।

अत्र केचित् रमाया पृथक् नैवेद्यं नार्पणीयम् । विष्णोरर्पणे "तरोर्मूलनिषेचनेन तृप्यन्ति तत् स्कन्धभुजोपशाखा" इति न्यायेन हर्यर्पितभागस्य समेषामुपलभ्यमानत्वात् पृथङ्निवेदन - मसाम्प्रदायिकम् इति वदन्ति ।

अत्रेदं प्रतिविधीयते -

१. पाद्मे उत्तरखण्डे (२५३. १०७) 'तदावरणसंस्थानं' देवस्य परतोऽर्चयेत् इति विष्णुपरिवारतया अन्यदेवानां पूजां विधाय, "हरेर्भुक्तावशेषेण वलिं तेभ्यो विनिक्षिपेत्" इति हरिणा स्वीकृतभागस्यांशविशेषसमर्पणं रमादीनां प्रतिपादितम् । अन्यथा हरिनिवेदनेनैव रमाब्रह्मादीनां प्रसादलाभे पृथङ्निवेदनविधानमनर्थकं भवेत् ।

[illegible] हर्यर्पित[illegible]समर्पणं रमादीनां [illegible] पृथगेवोक्तम्

रमाब्रह्मादि देवानां दत्वा तीर्थादिकं वलिम् ।। इति-

३. पृथगेव रमाब्रह्मादिभोग्यवस्तुषु हरिः सारभुक् इति वदद्भिः पण्डिताचार्यैरपि हरिनिवेदनेनैव रमा लब्धार्थेति योगदीपिकायां नोच्यते -

स्वमात्रभोग्यसारांश्च महालक्ष्म्यास्तथैव च ।
ब्रह्मेशशक्रकामादिदेवानां च पृथक् पृथक् ।
एवं मानुषपर्यन्तं स्थितानामधिकारिणाम् ।
योग्यान् सारांस्तथा श्रीशः पूर्णानन्दः परात् परः ।
भुङ्क्ते देवः परानन्दो ह्यचिन्त्यैश्वर्ययोगतः ।। इति

४. हर्यर्पितेनैव लक्ष्म्यादीनां प्रसादलाभे प्राण-विष्वक्सेनादीनां पृथक्समर्पणमप्यनर्थकमेव स्यात्

५. रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः ।
श्रीलक्ष्मीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ।।
इति स्मृतिरपि पार्थक्येनैव रमादीनां प्रसादसमर्पणमाज्ञापयति ।

तस्मात् रमादीनामपि विष्णुसमर्पितभागादेकमंशमुद्धृत्य प्रत्येकमेव निवेदितं समर्पणीयमिति स्थितम् ।

हरिनिवेदितं रमावायुसमर्पितमेव प्रसादरूपेण स्वीकरणीयम् । अन्यदेवानां निवेदितं तु न कदाऽपि स्वीकरणीयम् । तदुक्तं भगवत्पादाचार्यैः -

पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ।। इति । (कृ. म. ९२.)

'अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्' इत्यत्र अन्यदेवा इत्युक्ताः क इत्याकाङ्क्षायाम् अग्निपुराणे उक्तम् -

वायुलक्ष्मीहरीणां च त्रयाणामर्पिताशनम् ।
ग्राह्यमेव क्रमेण स्यात् ग्राह्यं नान्यार्पितं क्वचित् ।

तत्रैव -

विष्णुलक्ष्मीवायुदेवान् विना देवाः शिवादयः ।
अन्यदेवा इति प्रोक्ताः ते ये विष्णुप्रिया अपि ।

पाद्मे च -

परशुक्लत्रयस्य स्याद् देवत्वं नामृतान्धसाम् ।
[illegible]

गुरूनाह मनुः -

[1]निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ।
अल्पं वा वहु वा यस्य [2]श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपकृतिहेतुतः ।। इति

आचार्यपितृसमवाये आचार्यः प्रथमं वन्द्यः ।

'उत्पादकव्रह्मदात्रोर्गरीयान् व्रह्मदः पिता ।
साष्टाङ्गं प्रणमेत्तं हि [3]पितरं तदनन्तरम्' ।।

इति । १० ।

*२. प्रकाशिका*

जपस्य सङ्ख्यात्रयमुक्तम् । तत्र परसङ्ख्यया गायत्रीजपः तन्निगुणमष्टा -क्षरं जपेदित्यर्थः ।

अथ [4]दर्भादिविसर्जनानन्तरं कर्तव्यमाह *प्रणम्येति* । अनियतक्रमपाठेन सदाचारस्मृतिशास्त्रोक्तानां तर्पणपूजादिपदार्थानां [5]पाठ्क्रमस्याविवक्षां सूचयति। तेन अर्घ्यानन्तरं पठिते पितृतर्पणे शास्त्रान्तरदृष्टक्रमस्यानुमतिः सिद्धा भवति।

'देवान्' व्रह्मादीन्, यथोक्ततारतम्येन नमस्कुर्यात् । 'विप्राः' व्राह्मणाः, तांश्च प्रणमेत् । 'यावतीर्वै देवता वेदविदि व्राह्मणे वसन्ति । तस्माद् वेदविद्भ्यो व्राह्मणेभ्यो दिवे दिवे नमस्कुर्यात् ' इति श्रुतेः ।

*( के के अभिवाद्या इत्यत्र गौतमाभिप्रायकथनम् )*

'गुरून्' इत्यनेन अभिवादनीयान्तराभिधायकगौतमवचनं स्मारयति।

---

नारदीये -

देव देव यतः शुद्धो वासुदेवो जगद्गुरुः ।
हरिप्रियस्ततो ग्राह्यमन्नं वार्प्पितं बुधैः ।।

"आदौ भगवत्समर्पितमपि इतरदेवतानैवेद्यं सर्वथाऽग्राह्यमेवेति सम्प्रदायः" इति पूजाकल्पलतायां अन्यदेवतानैवेद्यस्वीकारस्यानर्थफलकत्वमुपपादितमतो मुमुक्षुभिस्तत्रावहितैः भाव्यम् इत्युक्तम् ।

१. निषेका ख. २. श्रौतस्यो उपकरो ख. ३. पितरं मातरं ख.

४. दर्भादिविसर्जनानन्तरं इति क कोशे नास्ति । ५. पाठ्क्रमविवक्षां सूचयति क.

तद्यथा - 'माता-पितृ-तद्बन्धून्-पूर्वजानि तदपत्यानि-विद्याप्रदानाचार्यान् गुरूंश्च' इति । मातुर्नमस्कार्यत्वेन तत्तुल्यानामपि नमस्कार्यत्वं सिद्धम् ।

मातृस्वसा मातुलानी [1]श्वश्री धात्री पितृष्वसा ।
पितामही पितृव्यस्त्री मातृमाता च मातृवत् ।।

मनुः -

पितुर्भगिन्यां मातुश्च जायस्यां च स्वसार्यपि ।
मातृवद् वृत्तिमातिष्ठेत् माता ताभ्यो गरीयसी ।।

पितृतुल्यानाह मनुः - 'ज्येष्ठभ्राता पितृसमः' इति ।

'पितृवत् पालयेत् भ्रातॄन् ज्येष्ठभ्राता यवीयसः ।
पुत्रवच्चापि वर्तेरन् यथैव पितरं तथा ।।' इति च ।

मातृत्वाद् भ्रातृभार्याऽपि नमस्कार्येत्याह मनुः -

'भ्रातृभार्याऽपि सङ्ग्राह्या सवर्णाहन्यहन्यपि ।' इति ।

*( उपाध्याय-आचार्य-गुरुशब्दार्थनिरूपणपूर्वकं तेषामभिवादने फलविशेषाभिधानम् )*

विद्याप्रदः उपाध्यायः । तथा च मनुः -

एकदेशं तु वेदस्य [2]वेदाङ्गान्यथवा पुनः ।
योऽध्यापयति वृत्त्यर्थं उपाध्यायं प्रचक्षते ।। इति ।

आचार्यलक्षणमाह स एव -

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
[3]साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ।। इति ।

गुरुलक्षणमाह याज्ञवल्क्यः -

' स गुरुर्यः [4]क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।।' इति ।
' निषेकादीनि कर्माणि यस्य यस्य करोति यः ।
तमपीह गुरुं विद्यात् [5]श्रुतौ यत्कृतिहेतुतः ।।'

गुरुतुल्यानाह हारीतः -

मातुलश्वशुरस्तातमातामहपितामहौ ।

---

१. श्वसू क. २. वेदार्थस्यापि क. ३. सांगं ख.
४. करात् ख. ५. श्रुततत्कृतिमात्रतः ख.

वर्णज्येष्ठः पितृव्यश्च इत्येते गुरवः स्मृताः ।।

आपस्तम्वः अभिवादनप्रशंसामाह -

'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो वलम् ।।'

अकरणे प्रत्यवायमाह हारीतः -

ऊर्ध्वं प्राणाह्युत्क्रमन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ।।

अभिवादनप्रकारमाहापस्तम्भः -

'[1]दक्षिणं वाहुं श्रोत्रसमं प्रसार्य व्राह्मणो अभिवादयेत्। उरःसमं राजन्यो । मध्यमं वैश्यः । नीचैः शूद्रः प्राञ्जलिः' इति ।

गुर्वादौ तु विशेषमाह - 'गुरोः पादोपसङ्ग्रहणम्' इति ।
उपसङ्ग्रहलक्षणमाह मनुः -

"व्यस्तेन पाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यः स्पृष्टव्यः दक्षिणेन तु दक्षिणः।"

इति सव्यदक्षिणपादौ सव्यदक्षिणहस्ताभ्यां स्पृष्टव्यौ ।

[2]व्राह्मणानां समवाये कः प्रथमं नमस्कार्य इत्यत्राह मनुः -

लौकिकं वैदिकं वाऽपि तथाध्यात्मिकमेव च ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ।

मातृपितृसमवाये पितैव नमस्कार्यः -

द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ।
वरौ गुरुशतात्तावत् [3]-------------- ।।
तयोरपि पिता श्रेयान् वीजप्रधान्यदर्शनात् ।

---

१. दक्षेण श्रोत्रं क.

२. व्राह्मणानां समवाय इति क कोशे नास्ति ।

३. कोशद्वयेऽपि ग्रन्थपातो दृश्यते ।

अभावे वीजिनो माता तदभावे तु पूर्वजः ।।

इति पुराणवचनात् ।

ननु मातुराधिक्यं श्रूयते - 'उपाध्यायाद्दशाचार्यो आचार्याणां शतं पिता। सहस्रं तु पितुर्माता गौरवेणातिरिच्यते' इति । नैवम् । एतस्य [1]वचनस्योत्पादकक्रमापेक्षया प्रवृत्तत्वात् । पिता संस्कारादिकर्ता चेत् स एव ज्यायान् आचार्यपितृसमवाये आचार्यो नमस्कार्यः ।

'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्' ।।

इति मनुवचनात् ।

स्वाध्यायकाले वृद्धेनाऽपि नमस्कार्यः -

वालोऽपि विप्रो वृद्धस्य पिता भवति मन्त्रदः ।
न हायनैर्न पलितैर्न वित्तैर्न च वन्धुतः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ।

इति मनुवचनात् । अनूचानो - [2]अनुवक्ता ।

*(अनभिवाद्याभिवादने प्रत्यवायनिरूपणम्)*

अभिवादनवर्ज्यानाह आपस्तम्भः -

'न सोपानट्को वेष्टितशिराः अवेदितयोनिर्वा अभिवादयेत्' इति । 'नोदहस्तो न भैक्ष्यं चरन् न पुष्पान्नादिहस्तो नाशुचिर्न धावन् न देवपितृकार्यं कुर्वन् न शयान' इति च ।

अनभिवाद्यानाह स एव -

नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ।
ज्ञान [3]कर्मगुणोपेताः यद्यप्येते वहुश्रुताः ।
अभिवाद्य द्विजः शूद्रं सचेलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुद्ध्यति ।

---

१. निषेकमात्रकर्त्रा इतरसंस्कारकर्दविषयत्वात् । २. अनुक्तो क.

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।
अभिवाद्य द्विजो मोहात् अहोरात्रेण शुद्ध्यति ।

विष्णुः -

सम्पत्सु चैव सर्वासु यज्ञे राजगृहेषु च ।
नमस्कारं न कुर्वीत ब्राह्मणान्नाभिवादयेत् ।। इति च ।

समान्नाभिवादयेत् इत्यर्थः ।

समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकः ।
जपहोमौ च कुर्वाणो नाभिवाद्यस्तथा द्विजः ।
पाषण्डपतितं व्रात्यं महापातकिनं [1]शठम् ।
सोपानट्कव्रतघ्नं च कथञ्चिन्नाभिवादयेत् ।
धावन्तं च प्रमत्तं च मूत्रोच्चारकरं तथा ।
भुञ्जानमातुरानर्हं नाभिवादेद् द्विजोत्तमम् ।
वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसं चैव स्नास्यन्तं नाभिवादयेत् ।
यो न वेत्त्यभिवाद्यस्य विप्रं प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ।

*(अभिवादितेन आशिषो देयाः)*

अभिवादितेनाशिषो वाच्या इत्याह मनुः -

आयुष्मान् भव सौम्येति वदेत् विप्रोऽभिवादने । इति
अभिवादे कृते यस्तु न करोत्यभिवादनम् ।
आशिषं वा न कुरुते स याति नरकान् बहून् ।
[2]स्वस्तीति ब्राह्मणे ब्रूयात् आयुष्मानिति भूमिपे ।
वर्धतामिति वैश्ये च शूद्रे तु स्वागतं वदेत् ।

विप्रोष्यागच्छन्तं प्रति विशेषमाह मनुः -

ब्राह्मणं कुशलं पृच्छेत् क्षत्रं पृच्छेदनामयम् ।

---

१. शुकम् क.
२. अयं श्लोकः ख कोशे न लभ्यते ।

वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च । इति ।
[1]परपत्नी तु या स्त्री स्यादसम्बद्धा च योनितः ।
तां ब्रूयात् भवतीत्येवं सुभगे भगिनीति च । इति च ।

[2]विप्रोष्यतपसं ग्राह्या ज्ञातिसम्बन्धियोषितः ।
गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ।
अभ्यञ्जनं स्नापनं च [3]गात्रोत्साहनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ।। इति
कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद् वचनं कुर्यात् असावहमिति ब्रुवन् । इति

हरिपार्षदान् इति देवादीनां विशेषणम् । हरिभक्तानित्यर्थः । अभक्तानां वन्दने आशिषां दाने च [4]बहुप्रत्यवायस्य वेदव्यासाचार्यैरपि तत्र तत्र समर्थितत्वात् । इति अभिवादनप्रकरणम् ।

अभिवादनानन्तरकृत्यमाह - 'एवं [5]सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद् हरिम्' इति । अर्चनं पूजा चाग्रे वक्ष्यते । १० ।

---

१. विप्रपत्नी ख. २. अभिप्रायः न ज्ञायते । ३. गोत्रात्सा क.
४. बहुप्रत्यवायस्य वा ख. ५. *सर्वोत्तमं विष्णुं ध्यायन्नर्चयेत्* इति । अत्र श्रौतपूजा निरूपितेत्यपि केचिद् व्याचक्षते । तथा हि पाद्मसम्हितायाम् । ब्रह्मोवाच -

सूक्तस्याङ्गेषु भगवन् पौरुषस्य कथं भवेत् ।
न्यासं कथं वा तत्वेन अर्चयामि तथा मम ।
पृच्छतः संशयो न स्याद् गृहार्चनविधिः कथम् ।

श्रीभगवानुवाच -

छन्दोऽनुष्टुप् ऋषीस्तस्य वासुदेवोऽस्य देवता । मूर्ध्नि फाले नयनयोर्नासिकायां तथा मुखे ।
गले बाह्वोश्च हृदये नाभौ चाङ्गे च मेहने । ऊर्ध्वोश्चरणयोर्न्यस्येत् प्रथमाद्या ऋचः क्रमात् ।
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् । द्वितीययाऽऽसनं दद्यात् पाद्यं दद्यात्तृतीयया ।
चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याचमनीयकम् । षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ।
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च । दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् ।
द्वादश्या तु तथा दीपं त्रयोदश्या चरुं तथा । चतुर्दश्या नमस्कुर्यात् पञ्चदश्या प्रदक्षिणम् ।
षोडश्योद्वासनं कुर्यात् शेषकर्माणि पूर्ववत् । समिदन्नाज्यहोमं च प्रकुर्यात् जातवेदसम् ।

*३. तन्त्रदीपिका*

तथा सर्वमन्त्राणां गायत्र्यक्षरसमसङ्ख्याक्षरजपत्वमभिप्रेत्य अष्टाक्षरस्य तावदाह - 'गायत्र्यास्त्रिगुणम्' इति ।

अत्र केचित् - सन्ध्या¹कर्म समाप्य पुनरासनादिनियमेन पश्चादनुष्ठेया -ष्टाक्षरस्य क्रमोक्तिरिति वदन्ति । तथात्वे मन्त्रान्तराणामननुवचनेन विशिष्याष्टाक्षरप्रतिपादनाऽयोगात् गायत्र्या क्रियमाण ²मातृकाभिरेकतन्तुत्वमिति सम्प्रदायः ।परेषां मन्त्राणां तु पश्चादनुष्ठानमनुक्तत्वादेव सिद्धम् ।

तत उपस्थानमाह - *प्रणम्येति* । तर्हि सर्वसाधारण्येन भगवत्प्रणामः कर्तव्य इति? नेत्याह - *एवं सर्वोत्तमम्* इति । एवं सामान्याकारेण प्रणामेऽपि सर्वोत्तमत्वेन ध्यानं कर्तव्यमित्यर्थः । तदनन्तरमनुष्ठेयमाह - *अर्चयेद्धरिम्* इति । ³औपासनाग्न्यादौ भगवद्ध्यानपूर्वकमर्चनं कर्तव्यम् इत्यर्थः। तथा -

'अथागत्य गृहं विप्रः प्रक्षाल्यांघ्रिं समाचरेत् ।
प्रज्वाल्याग्निं च विधिवत् जुहुयात् जातवेदसम् ।।'

इति पराशरोक्तेः । १० ।

*सदाचारस्मृतिः*

ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम् ।
धर्मेणेज्यासाधनानि साधयित्वा विधानतः ।
स्नात्वा सम्पूजयेद् विष्णुं वेदतन्त्रोक्तमार्गतः ।।११।।

*१. आह्निककौस्तुभः*

पूजानन्तरं कार्यमाह - *ध्यानेति* । यथायोग्यं ध्यानप्रवचनाभ्यां स्वयोग्यं सच्चिदानन्दादिगुणोपसंहृतिर्ध्यानम् । तेन 'छिन्दि'भिन्दि' इत्यादीनामनुपास्यता। अनेकभाषागम्ययावद्भारतार्थप्रवचनायोगात् यथायोग्यं शिष्येभ्यः शास्त्रप्रतिपादनं प्रवचनम् । वेदशास्त्रादेरध्ययनाध्यापनरूपं वा प्रवचनम् । आभ्यामंशाभ्यां युक्तमुपासनम् । शास्त्राभ्यासः यथायोग्यं यथाधिकारं श्रवणमनने च कार्ये

इत्यर्थः । यथोक्तं भगवत्पादैरन्यत्र (अनुव्याख्याने 3.3.1.) -

सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चैव तदङ्गं धारणादिकम् ।। इति ।

*( शास्त्रपाठप्रवचनस्य महाफलहेतुत्वप्रतिपादनम् )*

अयमत्र निष्कर्षः - ध्यानप्रवचनपदाभ्यां श्रवणमननोत्तरभाविन्याः [1]निदिध्यासनायाः भेदो उच्यते । च शब्देन शास्त्रश्रवणं मननं च सङ्गृह्यते । एवं च श्रवणेनाश्रुतमपि भगवन्महिमानं श्रुत्वा, मननेन तं महिमानं निश्चित्य ध्यानेन [2]तं पुनः पुनरभ्यस्य शिष्येभ्यो भगवन्महिमानं ब्रूयात् इत्येवंरूपमुपासनं कुर्यात् इति । यथोक्तं तन्त्रसारे (4. 141,142) -

सर्वस्मात् श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।
अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा ।
ध्यानं निश्चिततत्त्वस्य तस्मात् शास्त्रावमर्शनम् ।
वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।
अपरोक्षदृशाप्येषा कर्तव्या विष्णुतुष्टिदा ।। इति

अत्र स्वयमेकाकिना क्रियमाण [3]विष्णुविचारापेक्षया सभासु शिष्यान् भगवन्महिमासमर्थनस्य [4]शतगुणाधिक्यता भवति ।

' खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात् समाधिश्च दर्शनं चिरयाऽनया ।
अथवा सततं शास्त्रविमर्शेन भविष्यति ।' (तं.सा.सं.157)

इत्यादिध्यानं द्रष्टव्यम् । 'स्वाध्यायप्रवचन एवेति नाको मौद्गल्यः' इति च तैत्तिरीयश्रुतिः । स्वाध्यायो वेदपाठः। प्रवचनं तदर्थविचाररूपव्याख्यानम् ।

'स्वाध्याये च प्रवचने ह्यन्तर्भावो विशिष्यते ।
जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्याद् [5]मैत्रो ब्राह्मण उच्यते ।
सम्यग् ज्ञात्वैव यो विष्णुं व्याख्यायीत जपेत वा ।

---

१. निदिध्यासना या अभेदो ख. २. तत्परभ्यस्य क.
३. विष्णुरिति क कोशे नास्ति । ४. शताधिक्यता क. ५. मित्रो ख.

न तस्य किञ्चिदकृतम्' इत्याद्युक्तेः। (तै.भा.1.2)

*( प्रवचने अनध्यायदिवसाः )*

प्रवचने अनध्यायानाह उशनाः -

अयने [1]विषुवे चैव शयने वोधने तथा ।
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
अमावास्योभयं हन्ति प्रतिपद् बुद्धिनाशिनी ।
वृद्धौ साम्ये क्षये [2]चोषः त्रिचतुः पञ्चनाडिकाः ।
षट्चतुस्त्रिसृभिस्सायमनध्यायः प्रकीर्तितः ।
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुवन्धुषु ।
उपाकर्मणि चोत्सर्गे शिष्ये च गृहमागते ।। इति ।

उपासनोत्तरवृत्तिं वदन् मध्याह्नस्नानदेवतापूजादिकार्यमाह - *धर्मेणेति* 'विधानतः' सार्वविभक्तिकत्वात्तसिल् । स्वस्वविहितेन याजनसत्प्रतिग्रहादिना धर्मेण । पुष्पादीनि [3]स्वेनैवाहार्याणि न परत इत्यादिविधानतश्च । पञ्चमहायज्ञसाधनानि देवपूजासाधनभूतानि द्रव्याणि सम्पाद्य मध्याह्नकाले 'विधानतः' शौचाचमनसङ्कल्पादिपूर्वकं स्नात्वा शीतलेनोष्णेन वा वारिणा स्नानं कृत्वा वेद [4]पञ्चरात्रादितन्त्रोक्तमार्गेण सम्यक् भक्त्यादिपूर्वकं अर्घ्यपाद्यादिषोडशोपचारैः पूजयेत् ।

द्रव्यसाधनरीतिस्तूक्ता कूर्मपुराणे -

"[5]उपेयादीश्वरं चान्यं योगक्षेमप्रसिद्धये ।
साधयेद् विविधानर्थान् कुटुम्वार्थं ततो द्विजः ।
द्रष्टव्यं राजकुलं द्रष्टव्या [6]राजपूजिता लोकाः ।
यद्यपि न भवन्त्यर्थास्तथाप्यनर्था निवर्तन्ते ।। इति ।

ईश्वरमभिषेकादिगुणयुक्तम् । अन्यं वा श्रीमन्तमकुत्सितम् । अलब्धप्रापणं योगः । तद्रक्षणं क्षेमः ।

---

१. विषादे ख. २. दोषः क. ३. स्वे न हार्याणि ग.
४. पञ्चरात्रादि इति क कोशे नास्ति । ५. उपायादीश्वरं वन्यं ख. ६. लोकपूजिता क.

प्रतिग्रहे प्रतिषिद्धाः -

तिलधेनुर्गजो वाजी प्रेतान्नमजिनं मणिः ।
सुरभिस्सूयमाना च घोरास्सप्त परिग्रहाः ।। इति

*( देवपूजापद्धतिः )*

देवपूजाविधानम् । 'पूज्यश्च भगवान्नित्यं चक्राब्जादिकमण्डले' इति तन्त्रसारे विस्तृतमिति नात्रोक्तं भगवत्पादैः । [1]कतिचिद् विशेषप्रमाणानि उदाह्रियन्ते । स्नानानन्तरं [2]देवपूजार्थमग्र्योदकाहरणं कार्यम् । वशिष्ठसंहितायां च -

भाण्डे वरजलं नीत्वा शोधयित्वा सुवाससा ।
त्रिवारं शोधयित्वैव जलं कुम्भे प्रपूरयेत् ।

प्रागुक्तप्रकारेण स्नानादिकं कृत्वा कुम्भं सम्यक् प्रक्षाल्य नद्यादिशुद्धोदकम् उक्तक्रमेण गृहीत्वा तद्वस्त्रेणाच्छाद्य शिरस्यंसे वा निधाय स्वयमानीय - न्यैर्ब्राह्मणैरानाय्य वा देवस्य गृहद्वारसमीपे निधापयेत् । ततः पादौ [3]प्रक्षाल्याचमनं कृत्वा नासिकादीनाच्छाद्य तुलसीकाष्ठयुक्तं गन्धं कुर्यात् ।

पाद्मे -

तुलसीकाष्ठसंयुक्तं गन्धं यो यच्छते हरेः ।
निर्दहेत् पातकं सर्वं पूर्वजन्मशतार्जितम् ।।
तुलसीकाष्ठजातस्य गन्धं गृह्णाति केशवः ।

ततस्तुलस्या संशोध्य [4]सौवर्णादियागोपकरणपात्राणि तदभावे ताम्रादिमयानि तत्तत् शुद्धिसाधनद्रव्यैः सम्यक् प्रक्षाल्य अग्र्योदकादिसर्वसम्भारान् [5]मार्जनादि - युक्तरङ्गमण्टपे देवस्य दक्षिणंभागे स्थापयेत् ।

*( विष्ण्वालयसम्मार्जनोपलेपफलनिरूपणम् )*

सम्मार्जनफलं तूक्तं विष्णुधर्मोत्तरे -

---

१. कतिविशेषणानि ख.    २. दिवा पूजार्थं क.
३. आचमनं कृत्वा ख. ग.    ४. सुवर्णयोगेन करणनि पात्राणि क.
५. [illegible]

यः सदायतने विष्णोः कुरुते मार्जनक्रियाम् ।
स [1]पांसुपूतदेहश्च सर्वपापं व्यपोहति ।
यावत्यः पांसुकणिका मार्जने केशवालये ।
वर्षाणि दिवि तावन्ति तिष्ठत्यस्तमलो नरः ।
शनैः सम्मार्जनं कुर्यात् मार्जन्या मृदुकूर्चया ।
पश्यन् परिहरन् जन्तून् चान्द्रायणफलं लभेत् ।

उपलेपनं च तत्रैव -

गृहीत्वा गोमयं स्वच्छस्थाने वा पतितं द्विजः ।
उपर्यधश्च सन्त्यज्य प्रत्यग्रं जन्तुवर्जितम् ।
श्रीमत्यायतने विष्णोः यः कुर्यादुपलेपनम् ।
अग्निष्टोमं तु पक्षेण वाजपेयं तु मासतः ।
[2]संवत्सरेणाश्वमेधं समाप्नोत्युपलेपनात् । इति ।

देवालयप्रवेशप्रकारे स्मृतिः -

[3]प्रक्षाल्य पादौ हस्तौ च सम्यगाचमनं चरेत् ।
तत्र द्वारे श्रियं नत्वा जयं च विजयं तथा ।
वलं च [4]प्रवलं चेति द्वारपालांश्च पूजयेत् ।
तदनुज्ञामवाप्याथ तालत्रयकरो द्विजः ।
कपाटद्वयमुन्मील्य विशेद् रक्षांघ्रिपूर्वकम् ।

*( दीपप्रज्वालने महत्फलम् । देवमन्दिरादीपापसर्पणे महदनर्थम् )*

'अग्निनाग्निः समिध्यत' इति मन्त्रेण दीपं प्रज्वालयेत् । तत्फलं श्रीनृसिंहपुराणे -

घृतेन चाथ तैलेन दीपं यो ज्वालयेन्नरः ।
विष्णवे विधिवद् भक्त्या तस्य [5]पुण्यफलं श्रुणु ।
मेरुमन्दरमात्रेण कृताः पापस्य राशयः ।
दह्यन्ते नात्र सन्देहो दीपदानाद्धरेः सदा ।

---

१. पाण्डु ग. पांशु ख. २. संवत्सरे नश्वधं क. ३. प्रस्तार्य क.
४. विवल क. ५. पुण्यमनन्तकम् ख.

निमिषं निमिषार्द्धं वा घृतदीपं निवेदयेत् ।
कल्पकोटिसहस्राणि विष्णुलोके महीयते ।

दीपहरणे दोषः । पुलस्त्यः -
तस्मादायतने विष्णोर्दद्याद्दीपं द्विजोत्तमः ।
तान् प्रवोध्यान्न हिंस्यात्तु न् वा तैलवियोजितान् ।
कुर्वीत दीपहर्ता च मुग्धान्धो जायते जडः ।
आरोपितं प्रदीपं ये नयन्त्यन्यत्र मन्दिरात् ।
अन्धास्ते तु भविष्यन्ति मुग्धा वै जन्मजन्मसु ॥

अथ -
आयताभ्यां विशालाभ्यां शीतलाभ्यां [1]कृपानिधे ।
[2]करुणमृतपूर्णाभ्यां लोचनाभ्यां विलोकय ।

इति सम्प्रार्थ्य, ततः -
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।
अनेन दण्डवद्भूमौ कृताञ्जलिपुरस्सरः ।
प्रणम्योत्थाय कुर्वीत मस्तकेऽञ्जलिसम्पुटम् ।
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ।
कृताञ्जलिपुटो भूत्वा विनयानतकन्धरः ।
मानसान् वाचिकान् दोषान् कायिकानपि सर्वदा ।
वैष्णवद्वेषहेतून् मे भस्मसात् कुरु माधव ।
इति स्वदोषान् विज्ञाप्य [3]क्षमाप्य च रमापतिम् ।
आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलाञ्छनम् ।
अज्ञानाद् ज्ञानतो वाऽपि कांस्यघण्टां न वादयेत्[4] ।
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ।
तस्मात् सर्वप्रयत्नेन घण्टामाचाल्य पूजयेत् ।

१. विलोकय इति सम्प्रार्थ्य ग. २. करुणारसपूर्णाभ्यां ग. ३. क्षमस्व च क.
४. चेत् इति योज्यम् । तस्मात् कांस्यघण्टा वादनीया इति भावार्थः ।

इति परम्पुरुषसंहितायाम् ।

*( अष्टौ महामन्त्राः जप्याः )*

अथ तन्त्रसारोक्तरीत्या तत्त्वन्यासमातृकान्यासादिपूर्वकं मन्त्राणि जपेत् । [1]अथ महामन्त्राः नारदीये उक्ताः -

सर्वमन्त्रेषु गायत्री वरिष्ठा प्रोच्यते वुधैः ।
ततोऽपि प्रवराः प्रोक्ताः अष्टौ मन्त्रा मया धरे ।
प्रणवो-मातृकाऽ-ष्टार्ण-व्याहृति-द्वादशाक्षराः ।
गायत्री-पौरुषं-विष्णुर्महामन्त्राः प्रकीर्तिताः ।

अङ्गुल्यादिजपफलं पाद्मे -

अङ्गुलीजपसङ्ख्यानमेकमेकं वरानने ।
पर्वैर्दशगुणं प्रोक्तं पुष्पजीवफलैर्दश ।
शतं वै शङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
[2]मौक्तिकैश्शतसाहस्रं सौवर्णैर्लक्षमेव तु ।
कुशग्रन्थ्या कोटिगुणं तुलस्याऽनन्तकं फलम् ।।

इति ।

*( अक्षमालालक्षणम् )*

गोपुच्छावयवाकारामक्षमालां विधाय च ।
मेर्वाख्यं योजयेदक्षमेकं मूलाग्रसूक्तके ।
ग्रन्थिं कुर्यात्तदग्रेण कीर्तिता चाक्षमालिका ।। इति ।

*( अक्षमालाकर्षणप्रकारः )*

तत्र स्मृतिः -

मध्यमानामिकाङ्गुष्ठैर्गृहीत्वा जपमाचरेत् ।
अङ्गुष्ठतर्जनीभ्यां तु मालाकर्षस्तु मध्यमः ।
परदृष्टिगता माला निष्फला जपकर्मणि ।
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ।

---

१. 'अथ महामन्त्राः' इत्यारभ्य 'प्रकीर्तिता' इत्यन्तो भागः क. ग. कोशेषु नास्ति ।

२. मुक्तकेशैस्तु साहस्रं क.

उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ।
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ।

[1]पीठपूजाभिषेकावरणपूजानुयागादेर्विधिरन्यत्र प्रपञ्चितः ।

*(द्रवीभूतं चन्दनं घृतं विहाय घनीभूतमेवार्पयेत्)*

नैवेद्यसमये त्वयं विशेषः । वाराहे च -

द्रवीभूतं [2]घृतं चैव द्रवीभूतं च चन्दनम् ।
नार्पयेन्मम तुष्ट्यर्थं घनीभूतं तदर्पयेत् ।
अभिषेके तथा होमे घनीभूतं घृतं वरम् ।। इति
सत्पात्रे [3]चिद्रविःसौख्यं विविधानेकभक्षणम् ।
निवेदयामि देवेश सानुगाय गृहाण तत् ।
परिवेषयन्तीशं श्रीर्मुख्यप्राणोऽस्ति वीजयन् ।
भारत्याद्याः परिचरन्ति इन्द्राद्या द्वारपालकाः ।

इत्यनुसन्धानतः,

ततः स्वादुः पवस्वेति शुद्धोदकं निवेदयेत् ।
भोजं त्वामिन्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् ।
[4]अविढ्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ।

इति मन्त्रं पठन् जनार्दनं ध्यायेत् ।

अस्यार्थः - 'हे इन्द्र भोजं - भक्तोपहृतनैवेद्यादिस्वीकर्तारं त्वां वयं हुवेम -स्तुमः । हे इन्द्र अपांसि - वीर्याणि वाजान् - अन्नानि ददिर्दाता ।हे इन्द्र [5]चित्रया - तन्नामकेष्ट्या [6]भक्त्या वा विशिष्टान् अस्मान् ऊती रक्षणानि अविढ्ढि - विधेहि । हे इन्द्र - इष्टवर्षक त्वं वस्यसः - पूजकान् नः कृधि' इति ।

पुनः धूपादिभिः पूजां समाप्य देवस्य पुरतः अनया पूजनया । नारायणः प्रीयतामिति पुष्पोदकं समर्पयेत् ।

---

१. पाठ-पूजावरण ग.   २. घनं चैव क.

३. अस्य पदस्यार्थः न ज्ञायते ।   ४. अवधी ख.

५. चित्रया [illegible]   ६. भक्त्या वा इति ग. कोशे नास्ति ।

[1]अथ भक्तेभ्यः शङ्खतीर्थादिप्रसादं दद्यात् । 'निवेदितान्नतुर्यांशं विष्वक्सेनाय दापयेत्' इति पाञ्चरात्रे । एवं पूजां त्रिकालं कुर्यात् । शक्त्यभावे प्रातरेव समाप्य मध्याह्नादौ पुष्पमात्रैः पूजयेदिति ।

नारदीये -

प्रातर्मध्यन्दिनं सायं विष्णुपूजा स्मृता बुधैः ।
अशक्तो विस्तरेणैव प्रातःसम्पूज्य केशवम् ।
मध्याह्ने चैव सायं च [2]पुष्पाञ्जलिमपि क्षिपेत् ।। ११ ।।

*२. प्रकाशिका*

पूजानन्तरं कृत्यमाह - *ध्यानप्रवचनाभ्याम्* इति। अत्र ध्यानप्रवचन - शब्दाभ्यां श्रवणमननोत्तरभाविन्याः [3]निदिध्यासनायाः भेद उच्यते । च शब्देन सच्छास्त्रश्रवणमननरूपं सङ्गृह्यते । एवं च श्रवणेनाश्रुतमपि भगवन्महिमानं श्रुत्वा, [4]मननात्तं निश्चित्य ध्यानेन पुनः पुनः स्वशिष्येभ्यो भगवन्महिमानं प्रब्रूयादित्येवंरूपं उपासनं कुर्यादित्युक्तं भवति ।

अथवा 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चेति तदङ्गं धारणादिकम् ।' इति भाष्यवचनात्, ध्यानं च मनोवृत्तेर्नैरन्तर्यम् । 'नैरन्तर्यं मनोवृत्तेः ध्यानमित्युच्यते बुधैः' इति वचनात् । प्रवचनं शिष्येभ्यो भगवदुपदेशनम् । च शब्देन श्रवणमनने इति । [5]'व्याख्यानं श्रवणं मननं चेत्येतत्त्रयं शास्त्राभ्यासस्वरूपम् । ताभ्यामुपासनं कार्यमित्यर्थः।

*( वेदाभ्यासो हि पञ्चधा )*

"[6]वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।।" इति
" अनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम् ।

---

१. इदं वाक्यं क. ग. कोशयोर्नास्ति । २. पुष्पमञ्जलिमक्षिपेत् ख.
३. उपासनाय ख. ४. मानात्तत क.
५. व्याख्यानश्रवणं क. ६. वादस्वीकरणं क.

स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वयः ।।”
‘ द्वितीये च [1]तथा भागे वेदाभ्यासो विधीयते ।’

इति कूर्मपुराणे ।

वेदाभ्यासं ततः कुर्यात् प्रयत्नात् शक्तितो द्विजः ।
यजेदध्यापयेत् शिष्यान् धारयेद् वै विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः ।। इति च ।
न्यायतो [2]ज्ञायते धर्मो वेदादेवैप निर्वभौ ।
तस्मात्सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ।।

*पराशरः -*

ज्ञातव्यस्सर्ववेदार्थो वेदानां कर्मसिद्धये ।
पाटमात्रावसानस्तु पङ्के गौरिव सीदति ।।
[3]सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददन् समवाप्नोति ब्रह्मलोकमविच्युतम् ।।

*यमः -*

“य इमां पृथिवीं सर्वां सर्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रं च शिष्येभ्यो तच्च तच्च द्वयं समम् ।।
न निन्दाताडने कुर्यात् पुत्रं शिष्यं च [4]ताडयेत् ।
अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ।
अतोऽन्यथा तु प्रहरन् पापयुक्तो भवेन्नरः ।”

पापयुक्तो दण्ड्यः ।

शिष्यलक्षणानि तद्धर्माश्च ब्रह्मचारिप्रकरणे कथिताः ।

*(अनध्यायकालनिरूपणम्)*

अनध्यायानाह उशनाः -

[5]अयने विषुवे चैव शयने वोधने तथा ।
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।।

---

१. तदा यागे ख.  २. जायते ख.  ३. सर्वधर्म मतं ब्रह्म ख.
४. पालयेत् ख.  ५. आयने [illegible] ख.

अयने मकरकर्कटौ । विषुवे तुलामेषौ । मन्वादय उक्ताः सङ्ग्रहे -

तिथ्यग्नी न तिथिस्तिथ्याऽशा कृष्णेभो अनलो ग्रहः ।
तिथ्यर्कौ न शिवा श्वामे तिथिर्मन्वादयो मघोः ।

अस्यार्थः - मघोश्चैत्रमासात् क्रमेण एतास्तिथयो मन्वादयो ज्ञेयाः । 'तिथ्यग्नी' - पौर्णमासी तृतीया चैत्रे । 'न' - वैशाखे नास्तीत्यर्थः । 'तिथिः' - पौर्णमासी ज्येष्ठे । 'तिथ्याशा' - पोर्णमासी दशमी आषाढे । 'कृष्णेभो' - कृष्णाष्टमी श्रावणे । 'अनलः' - तृतीया भाद्रपदे । 'ग्रहः' - आश्विने (शुक्ल नवमी)। 'तिथ्यर्कौ' - पूर्णिमा द्वादशी च कार्तिके । 'न' - मार्गशीर्षे नास्ति । शिवा एकादशी पौषे । 'श्वामे' - [1](शुक्ल सप्तमी माघे) पौर्णमासी (अमावास्या) फाल्गुने । इति मन्वादयः।[2]

अन्येऽप्यनध्याया उक्ताः -

अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
अमावास्योभयं हन्ति प्रतिपद् बुद्धिनाशिनी ।।

ब्रह्माण्डपुराणे -

रात्रौ यामद्वयादर्वाक् यदि पश्येत् त्रयोदशीम् ।
प्रदोषः स तु विज्ञेयः सर्वस्वाध्यायवर्जितः ।
षष्ठी च द्वादशी चैव अर्धरात्रौ [3]नु नाडिकाः ।
तद्दोषो न त्वधीयीत तृतीया नवनाडिका ।

याज्ञवल्क्यः -

त्र्यहं प्रेतेष्वनध्यायः शिर्ष्यर्त्विग्गुरुवन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखिश्रोत्रिये मृते ।
पञ्चदश्यां चतुर्दश्यां अष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ।
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।

---

१. श्वामे सप्तम्यमावास्या माघे तिथिः

२. युगादयोऽपि एवमेव विज्ञयाः -

वैशाखमासे च सिता तृतीया नवम्यथो कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ।। इति ।

३. नवाडकाः क.

कृतेऽन्तरे त्वहोरात्रं शुक्रपाते तथोच्छ्रये ।
[1] खरोष्ट्रगर्दभोलूकसमवाय्यार्तनिःस्वने ।
अमेध्ये शवशूद्रीयश्मशानपतितोदके ।
देशेऽशुचावात्मनि च [2]विद्युत्स्तनितसम्प्लवे ।
भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ।
पांसुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ।
धावतः [3]पूतिगन्धे च शिष्टे च गृहमागते ।
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
अष्टत्रिंशदनध्यायास्तास्तांस्तात्कालिकान् विदुः ।

'अष्टका तु समाख्याता [4]सप्तम्यादिदिनत्रयम् ।
शास्त्रं न तत्राधीयीत व्रतबन्धं च वर्जयेत् ।'
इति प्रवचनरूपोपासाप्रकरणम् ।

प्रवचनरूपोपासनानन्तरं ध्यानरूपोपासनं कुर्यात् । तत्प्रकारस्तु तन्त्रसारोक्तो द्रष्टव्यः ।

उपासनोत्तरवृत्तिमाह - '*धर्मेणेज्यासाधनानि साधयित्वा विधानतः*' इति । *धर्मेणेति* । स्वविहितेन याजनादिनेत्यर्थः । इदमेव तृतीयभागे कर्तव्यमित्युच्यते । तत्र दक्षः - 'तृतीये च तथाभागे पोष्यवर्गार्थसाधनम्' इति पूर्वाह्णश्च तथाभागः ।

कूर्मपुराणे -
'उपेयादीश्वरं चान्यं योगक्षेमप्रसिद्धये ।
साधयेद् विविधानर्थान् कुटुम्बार्थं ततो द्विजः ।।' इति
ईश्वरमभिषेकादिगुणयुक्तम् । अन्यं वा श्रीमन्तमकुत्सितम् । अलभ्यप्रापणं योगः । तद्रक्षणं क्षेमः ।

---

१. वराष्ट ख.
२. वियास्तानित ख.
३. परिमलो ख. ४. तन्नयादि क.

माता पिता [1]गुरुर्भार्या प्रजादीनस्समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ।
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् । इति ।

अगर्हितानि कर्माणि अध्ययनादीनि, तान्युक्तानि ।

याज्ञवल्क्यः ।

'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।
[2]कुशीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम् ।।'

मनुरुपायान्तरमाह -

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ।

दायो - न्यायागतधनम् । लाभो निधिदर्शनम् । दायलाभश्चतुर्वर्णानाम् । जयः क्षत्रियस्यैव । क्रयो [3]गोदानार्थं धनप्रदानम् । कर्मयोगः कृषिर्वाणिज्यं च । प्रयोगकर्मयोगौ वैश्यस्यैव । सत्प्रतिग्रहो विप्रस्यैव ।

*(ब्राह्मणवृत्तयः षट्)*

कूर्मपुराणेऽपि -

"द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः ।
अध्यापनं याजनं च सर्वस्माद् वा प्रतिग्रहः ।
शिलोञ्छेनाप्युपादद्यात् गृहस्थस्य विधिः स्मृतः ।
असाधकस्तु स प्रोक्तः गृहस्थाश्रमसंस्थितः ।
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ।
[4]अमृतेनाऽपि जीवेत मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामथवा न श्ववृत्त्या कथञ्चन ।

१. गुरोर्भार्या क.

२. कुशेन वृष क.

३. भूदानार्थं क.



४. अनृतेनाऽपि क.

ऋतमुञ्छशिलं प्रोक्तं अनृतं स्यादयाचितम् ।
याचितं तु मृतं प्रोक्तं प्रमृतं कर्षणं स्मृतम् ।
सत्यानृतं तु वाणिज्यं तेन चैवोपजीव्यते ।
सेवा [1]श्ववृत्तिर्विख्याता तस्मात्तां परिवर्जयेत् ।" इति ।

नारदः -

"धर्ममूलाः क्रियास्सर्वा यत्नस्तस्यार्जने मतः ।
रक्षणं वर्धनं भोग इति तत्र विधिः क्रमात् ॥"

भारतेऽपि -

धर्मेणार्थः समाहार्यो धर्मलब्धस्त्रिसाधनम् ।
कर्तव्यं धर्म परमं मानवेन प्रयत्नतः ।
एकेनांशेन धर्मस्तु कर्तव्यो भूतिमिच्छता ।
एकेनांशेन कामस्तु एकेनार्थं विवर्धयेत् ।

तथा च मार्कण्डेयः -

पादेन तस्य पारत्रं कुर्यात्संचयमात्मवान् ।
अर्धेन चात्मभरणं नित्यनैमित्तिकान्वितम् ।
पादं चार्थार्थमर्थस्य मूलभूतं विवर्धयेत् ।

*( शुद्धं - शवलं - कृष्णं चेति धनं त्रिविधम् )*

नारदः -

"तत् पुनस्त्रिविधं ज्ञेयं शुद्धं [2]शवलमेव च ।
कृष्णं तस्य तु विज्ञेयो विभागस्सप्तधा पुनः ।
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं शुद्धं उदयोऽप्यस्य तु द्विधः
कुसीदकृषिवाणिज्य [3]शुक्लशिष्यानुवृत्तिभिः ।
कृतोपकारादापन्नं शवलं समुदाहृतम् ।
सेवापार्ष्णिकचौर्यार्तिप्रतिरूपकसाहसैः ।

1. श्ववृत्तिराख्याता ख. 2. शवलं ख. 3. शुक्र क.

व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥
यथाविधेन द्रव्येण यत्किञ्चित्कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥" इति ।

श्रुतेन-अध्ययनेन । शौर्येण-जयादिना । तपसा जपहोमसुरार्चनादिना । कन्यागतं-कन्यया सहागतं श्वशुरादेर्लब्धम् । शिष्यागतं-गुरुदक्षिणादि यागाभ्यागतं याज्यम् । अन्वयागतं-विभागलब्धम् । उदयः-फलम् । द्विधः-द्विविधः । अनुवृत्तिः सेवा, पाण्ण्किं । चौर्येण लब्धं चौर्यम् । आर्तिः-पीडा । प्रतिरूपं-कृत्रिमं धातुरत्नादि । पातगिर्यारोहादि साहसम् । व्याजेन-धनादिकं दत्वा यदुपार्जितम् ।

वैशेषिकं धनं विद्यात् ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहेण यल्लब्धं [1]याज्यतः शिष्यतस्तथा ।
त्रिविधं क्षत्रियस्याऽपि [2]प्राहुर्वैशेषिकं धनम् ।
वैश्यस्यापि त्रिलक्षणं कृषिगोरक्षवाणिज्यैः ।
शूद्रस्यापि त्वनुग्रहात् [3]--------------- ॥

द्विजानुज्ञया शूद्रस्याऽपि कृषिगोरक्षवाणिज्यैर्वैशेषिकं धनं स्यादित्यर्थः ।

सर्वेषामेव [4]वर्णानामेष धर्मो धनागमः ।
विपर्ययादधर्मः स्यात् न चेदापद् गरीयसी ।

इति वर्णवृत्तिप्रकरणम् ।

एवं पूर्वं वृत्तिं विधाय माध्याह्निकस्नानं देवपूजां च कुर्यादित्याह - *स्नात्वेति*। क्वचित् ज्ञात्वेति पाठः । तत्र माध्याह्निकस्नानं शास्त्रान्तराद् अवगत्य प्रातःस्नानवदेव नद्यादौ विस्तरेण कर्तव्यम् । ततो वस्त्रपरिधानादि [5]कुशधारणान्तं प्रातर्वत् । ततो मध्याह्नसन्ध्यां कुर्यात् । मध्याह्नसन्ध्याप्रकारः अस्मत्कृतसन्ध्याविध्याख्यग्रन्थे द्रष्टव्यः ।

---

१. यजतः क. २. प्राहुर्वैषयिकं ख. ३. अत्र कोशद्वयेऽपि ग्रन्थपातः दृश्यते ।
४. वर्णानामार्यधर्मः सनातनः क.
५. केशधारणान्तं क.

ततः सौरैर्मन्त्रैस्सूर्यमुपस्थाय गायत्र्यादिमन्त्रान् जपित्वा गृहमागत्य [1]देवपूजा कुर्यात् ।

*( एकादश विष्णुपूजापदानि )*

पूजास्थानान्युक्तानि भागवते (भाग. 11.12.42) -

सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ।
सालग्रामशिला वाऽपि [2]चक्राङ्कं यत्र तिष्ठति ।
योजनानां तथा त्रीणि मम क्षेत्रं वसुन्धरे ।
शालग्रामोद्भवं देवं शैलचक्राङ्कमण्डितम् ।
[3]यत्राभिपीयीत तत्र वाराणस्याः शताधिकम् ।
यथा गङ्गोदकं त्यक्त्वा पिबेत्कूपोदकं नरः ।
तथा हरिं परित्यज्य चान्यदेवमुपासते ।

पूजादेशमाह कृष्णामृतमहार्णवे -

यस्तु विष्णुपरो नित्यं दृढभक्तिर्जितेन्द्रियः ।
स्वगृहेऽपि वसन् याति तद्विष्णोः परमं पदम् ॥ इति ।

भागवतेऽपि -

'यः षट्सपत्नान् विजिगीषमाणो
गृहेऽपि निर्विश्य यतेत पूर्वम् ।' (5.1.18.)

तथा -

' भयं प्रमत्तस्य वनेष्वपि स्यात्
यतो वसन्ते सह षट्सपत्नाः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किं नु करोत्यवद्यम् ॥' (5.1.17.)

पूजार्थं गृहे हरिमन्दिरं कर्तव्यमित्युक्तं तन्त्रसारे । [4]"मृद्दारुशैलैर्लोहैः' इत्यादि । 'विष्णोर्विमानं यः कुर्यात् हरिभक्तिसमन्वितः । हंसयुक्तविमानेन विष्णुलोकं स गच्छतीति ।' एकादशस्कन्धेऽपि (11.27.49,50&53) -

'मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद् दृढम् ।

---

१. दिवा पूजां ख. २. चक्रान्ती यत्र तिष्ठत ख. ३. पात्रेऽभिषयत क.
४. मृद्दारुशैलैर्लोहैर्वा कुर्याद् देवालयं दृढम् । *तन्त्रसारसङ्ग्रहे 3. 50.* ।

पुष्पोद्यानानि रम्याणि पूजां तत्रोत्सवाश्रिताम् ।
पूजादीनां प्रवाहार्थे महापर्वसु चान्वहम् ।
क्षेत्रार्पणपुरोग्रामान् दत्वा मत्सार्ष्टितामियात् ।
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।
वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम् ।।'

प्रातर्मध्याह्ने च पूजा कार्या। पूजार्थं तुलस्यादिसम्भारान् समर्पयेत् ।

तथा च एकादशस्कन्धे (11.27.18.) -

शुचिः सम्भृतसम्भारः प्रागग्रैः कल्पितासनः ।
आसीनः [1]प्रागुदग्वार्चेद् अर्चायां त्वथ सन्मुखः ।। इति

गारुडे -

धात्रीफलेन यत्पुण्यं जयन्त्यां समुपोषणे ।
खगेन्द्र यल्लभेन्मर्त्यः तुलसीपूजनेन तत् ।।

पाद्मेऽपि -

[2]मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च ।
तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम् ।।

ब्राह्मे -

नित्यमर्चयते यो वै तुलस्या हरिमीश्वरम् ।
महापापानि नश्यन्ति किं पुनश्चोपपातकम् ।। इति

*(दशरात्रपर्यन्तं न तुलसी पर्युषिता भवति)*

तात्कालिकतुलस्यभावे पर्युषिताऽपि ग्राह्या । तथा हि । नारदीये -

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ।
[3]पङ्कजं पञ्चरात्रं स्यात् सप्तरात्रं तु बिल्वकम् ।
तुलसी दशरात्रं स्यात् ततः पर्युषितं भवेत् ।
न छिन्द्यात्तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् ।

तथा, भानुवारं विना दूर्वां तुलसीं द्वादशीं विना। इति गारुडवचनात् ।

---

१. प्राङ्मुखश्चार्चेद् क. २. मणिकर्णिकपुष्पाणि ख.
३. अयं श्लोकः क कोशे नास्ति।

भृगौ भौमे [1]धृतौ पाते पर्वक्रान्तिषु नाहरेत् ।
तुलसीमिन्दुवारे तु विल्वपत्रं च नाहरेत् ।

तुलस्यवचये मन्त्रः -

तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये ।
केशवार्थे विचिन्वामि वरदा भव शोभने ।। इति ।

कृष्णामृतमहार्णवे -

सकृदभ्यर्च्य गोविन्दं विल्वपत्रेण मानवः ।
[2]मुक्तिभागी निरातङ्को विष्णुलोके चिरं वसेत् ।

तथा - भक्त्या दूर्वाङ्कुरैर्विप्रः पूजितः पुरुषोत्तमः ।
हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम् ।। इति ।

अथ पुष्पाणि -

'न निर्माल्यं हेमपुष्पं अर्पितैरर्पितं सदा ।' इति ।

वृक्षादिजान्यपि सद्वर्णानि सद्गन्धानि पूजार्थं सङ्ग्राह्याणि केतकी मल्लिका [3]पुन्नागचम्पकादीनि ।

घण्टादीनि [4]अर्चापात्राणि च सङ्ग्राह्याणि । स्नानपात्राणि - स्नानकलशं - शोभनानि वासांसि - कर्पूरं - कस्तूरि - कुङ्कुम - केसर - परिघृष्ट - मलयचन्दन-धूप-दीप-नैवेद्य-ताम्बूल-च्छत्र-चामर-व्यजनादर्शपादुकादि महाराजो -पचारांश्च सम्पादयेत् ।

स्कान्दे -

स्नानकाले विशेषेण घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यमनन्तकम् ।
स्नापयित्वा च तैलेन नीरोगः सम्प्रजायते ।

---

१. घृते पात्रे. ख. २. मुक्तिंभोगी क. ३. XXXXXX ख.
४. अर्घ्यपात्राणां ख.

अम्बुना स्नापयित्वाऽथ श्रियमाप्नोत्यनुत्तमाम् ।
[1]धूपदानेन धर्मज्ञ गतिमाप्नोत्यनुत्तमाम् ।
तथा दीपप्रदानेन चक्षुष्मानभिजायते ।
अन्नदः सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ।
[2]पानकानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।
वस्त्रदो [3]रूपमाप्नोति रूप्यदश्चैव भार्गव ।
रुक्मदः सर्वमाप्नोति श्रियमाप्नोति सम्पदः ।
छत्रदः स्वर्गमाप्नोति तालनृत्तप्रदो दिवम् ।
चामराणां प्रदानेन राजा भवति धार्मिकः ।
[4]पताकायाः प्रदानेन सर्वपापं व्यपोहति ।
ध्वजदानेन लोकेऽस्मिन् ध्वजभूतो भवेन्नरः ।
नानाविधानां भोगानां [5]तथाऽरामप्रदायकः ।
नमस्कारप्रणामाभ्यां सर्वपापैः प्रमुच्यते ।
प्रदक्षिणं तथा कृत्वा [6]भवत्याधारको नरः ।
स्तुत्वा च देवता राम मनोदुःखात्प्रमुच्यते ।
दन्तकाष्ठप्रदानेन दन्तसौभाग्यमृच्छति ।
पादुकायाः प्रदानेन गतिमिष्टामवाप्नुयात् ।

देवपूजाप्रकारस्तु अस्मत्कृत *'मन्त्रमालापूजापद्धतौ'* द्रष्टव्यः ।११।

### *३. तन्त्रदीपिका*

अनन्तरं ब्रह्मयज्ञमाह - *ध्यानप्रवचनाभ्याम्* इति । पुनर्ध्यानग्रहणात् प्रवचनवदेव [7]अग्निगतभगवदुपासनादेरपि नित्यकर्मत्वं सूचितं भवति । 'अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः' इति वचनात् । प्रवचनं ब्रह्मयज्ञः । 'हुतानलो ब्रह्म जजाप वाग्यतः' इत्युक्तेः ।

एतेन प्रवचनशब्देन सच्छास्त्रप्रवचनमेव विवक्षितमिति निरस्तम् ।

१. धूम क. २. यावकानां ख. ३. रूप्य क.
४. पातकायाः ख. ५. वृथामरदायकः ख. ६. भवत्याराधको क.
७. अग्निभगवदुपासनादेः क.

तथात्वे प्राज्ञाप्राज्ञ [1]साधारणाधिकारिकत्वमस्य शास्त्रस्य न स्यात् । तस्य [2]प्राज्ञाधिकारिकत्वात् पाक्षिकग्रहणं भवेदिति यथायोग्यमुक्तम् ।

ततः तुलसीपुष्पभगवन्नैवेद्योपयोगिपदार्थोपादानप्रकारमाह - *धर्मेणेति* । इज्यासाधनानि पूजासाधनानि । अनिषिद्धकाले तु तुलस्याहरणं धर्मः । कदाचिदसङ्ग्रहे तु न दोषः ।

निषिद्धतिथिवारादौ तुलस्याहरणं मुने ।
वैष्णवानां न दोषाय नारदस्य वचो यथा ।
[3]जीवेद्यायावरेणैव विप्रः सर्वत्र सर्वदा ।
वर्जयित्वैव पाषण्डान् पतितान् यानवैदिकान् ।

इति पराशरोक्तेः ।

एवं प्रकारेण इज्यासाधनानि पूजासाधनानि सम्पाद्य 'विधानतः' पूर्वोक्तविधानेन स्नानं कर्तव्यमित्याह - स्नात्वेति । समित्युपसर्गेण [4]त्रिकरणैकप्रकारत्वं सूचितम् । वेदतन्त्रोक्तमार्गतः । वेदः पुरुषसूक्तादिः, तन्त्रः 'पूज्यश्च' इत्येवमादिः । मार्गेण प्रकारेणेत्यर्थः । ११ ।

*सदाचारस्मृतिः*

***( सर्वं विष्णौ समर्पयेत् )***

वैश्वदेवं बलिं चैव कुर्यान्नित्यं तदर्पणम् ।
इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ।। १२ ।।

*१. आह्निककौस्तुभः*

नित्यं स्वशाखोक्तरीत्या वैश्वदेवं यत्र विश्वे देवा इज्यन्ते, तद् वैश्वदैविकं कर्म कृत्वा, वलिं वलिहरणाख्यं कर्म कृत्वा, 'नित्यं तदर्पणं' विष्णावर्पणं कुर्यात् ।

---

१. साधारणाकारकत्व ख.
२. प्राज्ञकत्वपक्षग्रहणे ख.
३. जीवेदु आवरणेनैव क.    ४. त्रिकारण प्रकारत्वम् क.

तदुक्तं स्मृतिषु -

[1]शालाग्नौ लौकिके वाऽपि जले भूम्यामथापि वा ।
वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ।
अध्यापनं ब्रह्मयज्ञो पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ।
लौकिकाग्नौ पचेदन्नं वैश्वदेवोऽपि लौकिके ।
न चुल्यां नायसे पात्रे न भूमौ न च खर्परे ।
वैश्वदेवं प्रकुर्वीत [2]कुण्डे वा स्थण्डिलेऽपि वा ।
जुहुयात् सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पयसाऽभ्यक्तं तदभावेऽम्भसाऽपि वा ।
अलाभे येन केनाऽपि [3]फलशाकोदकादिभिः ।
पयोदधिघृतैः कुर्याद् वैश्वदेवं स्रवेण तु ।
हस्तेनान्नादिकं कुर्याद् अद्भिरञ्जलिना जले ।
कोद्रवं चणकं माषं मसूरं च [4]कुलित्थकम् ।
क्षारं लवणं सर्षपं च वैश्वदेवे विवर्जयेत् ।
रुक्षैर्दरिद्रतां याति क्षारं हुत्वा व्रजत्यधः ।
गोधूमश्चणकश्चेति ह्येष क्षारगणो मतः ।

( *तुलसीकाष्ठं दलं वाग्नौ प्रक्षिप्यैव वैश्वदेवः कार्यः* )

तुलसीदलेन रहितं वैश्वदेवं करोति यः ।
देवतास्तत्र गृह्णन्ति गृह्णन्ति ब्रह्मराक्षसाः ।
विना व्याहृतिहोमेन होमो वै निष्फलो भवेत् ।। इति ।

शौनकः -

अनुयागे ह्यशक्तश्चेत् [5]षोडशाज्याहुतीर्जुहेत् ।
क्रमेण पौरुषं सूक्तं व्याहृतीभिस्समन्वितम् ।
वैश्वदेवं ततः पश्चाद् तुलसीदलसंयुतम् ।
[6]विष्ण्वाहुतिं समुत्सृज्य वैश्वदेवं करोति यः ।

---

१. वालाग्नौ ग. २. काण्डे ख. ३. फलशाल्युदकादिभिः ख.
४. कलित्थकम् क. ५. द्वादशाज्याहुतीर्यसेत् ग. ६. विष्णोराहुतिमुत्सृज्य ख.

देवतास्तत्र गृह्णन्ति तस्य यज्ञो निरर्थकः ।
वदरीफलप्रमाणान्नं वैश्वदेवे मितं भवेत् ।
रुद्राक्षस्य प्रमाणं वा आर्द्रामलकमेव वा ।। इति ।
अकृत्वा वैश्वदेवं तु भुङ्क्तेऽन्नं यो द्विजाधमः ।
स मूढो निरयं याति [1]कालसूत्रमवाक्शिराः ।
साग्नयोऽप्येकपाकाशा भ्रातृपुत्रादयो यदि ।
अपृथग्वैश्वदेवं तु स्वपाकान्निर्वपेद् गृही ।
[2]अविभक्तेषु संसृष्टेष्वेकेनापि कृतं तु यत् ।
देवयज्ञादिसर्वार्थं लौकिकाग्नौ तु निक्षिपेत् ।।

इति व्यासः ।

*( वैश्वदेवे निवेदितसमर्पणं न दोषायेति प्रतिपादनम् )*

तत्र वैश्वदेवादिप्रकारविचारः, पञ्चरात्रे -

*नारायण उवाच -*

स्वस्य न्यासादिकं कृत्वा वैश्वदेवं समाचरेत् ।
विष्णोर्नैवेद्यशेषेण वैश्वदेवं समाचरेत्
ये देवा ह्यत्र तिष्ठन्ति वैश्वदेवे तु कर्मणि ।
सर्वेष्वपि तु मां ध्यायेत् [3]सर्वकर्मार्थसिद्धये ।
तथा व्याहृतिरूपेषु चतुरूपं स्मरेत्तथा ।

*ब्रह्मोवाच -*

छिन्दि सर्वज्ञ सर्वेश संशयं मे महत्तरम् ।
विष्णोर्नैवेद्यशेषेण वैश्वदेवादिकं चरेत् ।
इत्युक्तं तु त्वया पूर्वं तत्र मे संशयो महान् ।
त्वदर्पितान्नं देवेश देवानामुचितं नृणाम् ।
त्वदर्पितं तु नैवेद्यं कथं त्वं पुरुषोत्तम ।
गृह्णासि भो ह्यधिष्ठाने त्वदुच्छिष्टं यतः परम् ।

*भगवानुवाच -*

साधुसाधु महाभाग श्रुणुष्व कमलासन ।
त्वया पृष्टं प्रवक्ष्यामि श्रुणुष्वैकमना भव ।

---

१. कालसूत्रमिवाशिरः ग. २. अनुभक्तेषु ग.
३. सर्वकर्मार्थसिद्धये ...

यथाग्नौ [1]संस्कृताज्यं वा अग्नावेव हि हूयते ।
मदर्पितं प्रगृह्णामि यज्ञहोमद्विजातिषु ।
असङ्गोऽहं महाभाग तस्मात् मे नास्ति कर्मणः ।
वन्धनं पुरुषश्रेष्ठ मा शङ्कीर्ह्यत्र पुत्रक ।
[2]निवेदितान्नशेषेण ये यजन्ति द्विजातिषु ।
सर्वस्थं मां समुद्दिश्य स्मृताः कर्मसु कौशलाः ।
अयोग्यं न यथा होमे घृतं संस्कारवर्जितम् ।
[3]ऋते तदर्पणं प्राज्ञ यज्ञादौ विफलं भवेत् ।
अहं यदि न गृह्णामि तेषां तु ग्रहणं कुतः ।
भक्तानामदनार्थाय गृह्णामि कमलासन ।
तस्मान्नैवेद्यशेषेण ददतां नास्ति पातकम् ।
देवांस्तथाऽपि वै विप्रान् उद्दिश्य पुरुषर्षभ ।
मम नैवेद्यशेषेण न [4]ददन्ति मदर्पणम् ।
अधिष्ठानेषु देवेश ते यान्ति ह्यधरं तमः ।
प्रतिमायामर्पितं मे नार्पयेत् प्रतिमान्तरे ।
यथाग्नौ संस्कृताज्यं तु न हि [5]संस्क्रियते पुनः ।
अर्पितं प्रतिमायां मे नार्पयेत् प्रतिमान्तरे ।
संस्कृताज्यं [6]यथा ह्यग्निहोमाग्नौ तु तथैव च ।
[7]उभयत्राऽपि गृह्णामि नैकवारं पुनः पुनः ।
एवमेव यथा ब्रह्मन् नैकवारं द्विजातिषु ।
पौनःपुन्येन ह्येकत्र तज्जातीये तथैव च ।
न गृह्णामि महाप्राज्ञ गृह्णामि तत्र तत्र वै ।
न गृह्णामि महाप्राज्ञ कर्तैकश्चेत्तदैव च ।
तज्जातीयेऽपि च गृह्णामि यदि कर्ता पृथग् भवेत् ।
निवेदितं प्रतिग्रासात् सत्वजाते क्रमादपि ।
यत्यादिभिर्गृहस्थैश्च व्ययीकुर्यान्निवेद्य वै ।

---

१. संस्कृतान्नं ग.　　२. निवेदयान्न शेषेण क.　　३. कृते क.
४. वदन्ति क.　　५. संक्रयते ग.　　६. तया क.
७. उभयत्रापि इत्यारभ्य तत्र तत्र वै इत्यन्तो भागः ग कोशे नास्ति । ग.

श्राद्धादौ [1]कर्तृसत्वस्य सत्वान्नैव विनिन्दितम् ।
हविष्यं पञ्चधा कृत्वा पूर्वभागात् षडाहुतीः ।
अहविष्यं द्वितीयाच्च जुहुयादुष्णभस्मनि ।
द्वौ [2]भागशेषौ संसृज्य धर्मादीनां वलिं हरेत् ।
अग्रदानं देवयज्ञं भूतयज्ञं तथैव च ।
भागात्तृतीयाज्जुहुयात् पितृयज्ञश्चतुर्थभाक् ।
पञ्चमात् मानुषो यज्ञो वैश्वदेवे त्वयं विधिः ।

इति स्मृतिः ।

नरसिंहपुराणे -

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ।
[3]वैश्वदेवाकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् ।
न तु [4]भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ।

( *भिक्षुकशब्दार्थः* )

यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ।। इति

श्राद्धविषये सङ्ग्रहे -

[5]गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम् ।
श्राद्धपाको न दातव्यो यावत्पिण्डान्न निर्वपेत् ।

तस्यापवादस्तत्रैव -

अदत्वा भिक्षवे भिक्षां यः श्राद्धं कुरुते द्विजः ।
त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता ।। इति

अत्र येन वै कर्मणा विश्वेदेवाः प्रियन्ते तद्वैश्वदेवम् । इदं तु कर्म [6]आत्मसंस्कारकमन्नसंस्कारकं च ।

---

१. कृतसत्वेन ग.     २. द्विभोगशाणी ग.

३. वैश्वदेवकृते क.     ४. दिक्षुकृतं क.

५. गृहा[illegible] क.     ६. आत्मसंस्कारकमिति क कोशे नास्ति ।

गृहस्थो वैश्वदेवार्थं कर्म प्रारभते दिवा ।
अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते ।

इति वचनात् ईशार्पणपुरस्कृतेनानेन कर्मणा [1]पुण्याख्यादृष्टस्योत्पत्तिरेव आत्मसंस्कारः । अग्नेः वैश्वदेवजन्यसंस्कारस्तु, 'व्रीहीन् प्रोक्षति' इत्यादौ प्रोक्षणेन व्रीह्यादौ देवतासन्निधानाख्यो वा, विष्णुप्रियत्वरूपो वा यथा प्रोक्षणजन्यः संस्कारस्तथेहाऽपि । कश्चित् [2]व्रीहीप्रोक्षणजन्यः शक्त्यपरनामा कर्मोपयोगि - त्वलक्षणः संस्कारो व्रीहिषु उत्पद्यते तद्वदत्राऽपि कल्प्यते ।

ननु एकस्य उभयार्थत्वं विरुद्धमिति चेन्न । [3]जातकर्मणः पुत्रसंस्कारकस्य पितरि फलजनकत्वमिव गुरुणाऽनुष्ठितस्योपाकर्मणः गुरौ अतिशयाधायकस्य ब्रह्मचारिच्छात्रसंस्कारकत्ववद्वोपपत्तेः ।

नन्वत्रान्नसंस्कारकं कर्म किं [4]देवयज्ञमात्रं अन्यदपि वेत्यत उक्तं भगवत्पादैः - *वैश्वदेवम्* इति । अत्र वैश्वदेवपदेन देवयज्ञमात्रम्, तथा चान्नसंस्कारकं देवयज्ञमात्रम्, न भूतवलिरित्याशयेन वलिं पृथगाह - *वलिं चैव कुर्यान्नित्यं तदर्पणम्* इति । अत एव -

वैश्वदेवाहुतीरग्नौ अर्वाक् ब्राह्मणभोजनात् ।
पश्चात्तु भूतयज्ञादि श्राद्धं कृत्वा तु तत् स्मृतम् ।।

इत्यत्र श्राद्धे देवयज्ञमात्रानुष्ठानोत्तरं ब्राह्मणभोजनं ततो भूतयज्ञादि विहितम् । [5]ततश्चक्राकारेण वलिहरणं दत्वा ये भूताः प्रचरन्ति इति मन्त्रेण शुद्धभूमौ किञ्चिज्जलमासिच्य शुनां चाण्डालानां वायसानां च पिण्डत्रयं दद्यात् ।

( *वलिहरणप्रकारः* )

ततो गोदोहनमात्रमतिथीन् प्रतीक्षेत । तथा चाह शौनकः -

आयुष्कामो दिवा रात्रौ स्रुवकारं वलिं हरेत् ।
आयुरारोग्यकामो वा ध्वजाकारं वलिं हरेत् ।

---

१. पुण्याद्यष्टोत्पत्ति ग. २. व्रीहि प्राक्षेपजो कर्मयोगित्व ग.

३. ज्ञानकर्मणा ग. ख. ४. देवा यज्ञा मात्रा ख.

५. ततश्चन्द्राकारेण ख.

[1]मृत्युरोगविनाशार्थी पुमाकारं वलिं हरेत् ।
धर्मार्थकाममोक्षार्थी चक्राकारं वलिं हरेत् ।
[2]चक्राकारमप्याष्टारं कुर्यादग्निसमीपतः ।
चक्राकारेण यो विप्रः सदा भूतवलिं हरेत् ।
सर्वपापविनिर्मुक्ता विष्णुलोके महीयते ।
तत्रागतेभ्यो विप्रेभ्यो दद्याच्छक्त्यनुसारतः ।
चोरो वा यदि चाण्डालो विप्रघ्नः पितृघातकः ।
वैश्वदेवे तु सम्प्राप्तस्सोऽतिथिः [3]सर्वसङ्ग्रहः ।
सुमुखात्तुष्ट आदित्यः सम्भाषेण सरस्वती ।
स्वागतेनाग्नयः प्रीता आसनेन शतक्रतुः ।
● अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ।
ततो गोदोहनमात्रं वै कालं तिष्ठेद् गृहाङ्गणे ।
अतिथिप्रेक्षणार्थाय तदूर्ध्वं तु यथेच्छया ।
अनुद्धृतं वलिं दृष्ट्वा प्राणायामान् षडाचरेत् ।
स्वयमुद्धरते तत्र प्राजापत्यं समाचरेत् । इति ।

आश्वलायनपरिशिष्टे -

[4]देवानाकीर्तयिष्यामो यत्र यत्र वसन्ति ते ।
द्वारे पितामहं विद्यात् प्रकीले च उमापतिम् ।

इत्यक्त्वा चाण्डाल-पतित-वायसेभ्योऽन्नं भूमौ निक्षिपेत् । प्रक्षाल्य पादौ पाणी च आचम्य गृहं प्रविश्य जपेत् इत्यादि ।

अस्यार्थः - कीर्तयिष्यामो वलिहरणमिति शेषः । यत्र यत्र स्थाने या या देवता वसन्ति तेषामित्यन्वयः । ता दर्शयति - *द्वार* इति । गृहद्वारमित्यर्थः । प्रकीला [5]कपाटार्गला शुनां पतितचण्डालानां वायसानां च पिण्डत्रयं दद्यात् । तच्च भूमावेव न साक्षात् । भूमौ दत्ते श्वादयो निगृह्णन्तु वा [6]मा वा न

१. मृत्युयोग क. २. द्वाविमौ पादौ क कोशे न विद्येते । ३. स्वर्गसङ्ग्रहः क. ग.
● पितरः पादशौचेन अन्नाद्येन प्रजापतिः । ताम्बूलाच्चन्द्रमा प्रीतः शयने सर्वदेवताः ।।
४. देवानां कीर्तयिष्यामो ५. कटालागता ग. ६. मामवा ग.

नियम इत्यर्थः । अत्र पतिताः, प्रमादत एव महापातकिनः । एते तु चण्डालादयः विष्णुभक्ता एव न विष्णुद्रोहिणः पाषण्डिनः । भूमावपि पाषण्डिभ्यः स्वयं न दद्यात् । किं तु [1]स्वयं गेहमध्ये गते सति पाषण्डी आगत्य यदि गृह्णीयात् तर्हि ओम् इति । चण्डालादीनां वासुदेवभक्तत्वं तु -

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखात् श्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनात्मगेह-
प्राणः पुनाति सततं न तु भूरिमानः ।।

इत्यादि भागवते (भाग. 7.9.10) प्रमितम् ।

न 'चान्नस्य क्षुधितं पात्रम्' इत्यस्य का गतिरिति चेत्, इत्थम्, [2]विष्णुद्रोहादिशून्यः क्षुधित एवान्नस्य पात्रं, न तस्मिन् वेदादिपरीक्षा कार्या । कन्यादिदानार्थमेव सा कार्येति वाक्यार्थः । अन्यथा पाषण्डिनां भिक्षादिदानेन पोषणे कृते तैः क्रियमाणस्य [3]पापादेरानुकूल्यं कृतं स्यात्, तच्चाप्यस्य प्रत्यवायहेतुर्भवेदिति तत्त्वमार्या युक्तमुत्पश्यन्ति ।

( *गोग्रासविधिः* )

वायुपुराणे -

सौरभेय्यः सर्वहिता सर्वपापप्रणाशनाः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ।
गां स्पृष्ट्वा च नमस्कृत्य कृत्वा चैव प्रदक्षिणाम् ।
[4]प्रदक्षिणीकृतानेन सप्तद्वीपा वसुन्धरा ।
इत्थमेव तु कुर्वीत गवां ग्रासं दिने दिने ।।

एवं प्रबोधमारभ्य वैश्वदेवपर्यन्तं कर्मोक्त्वा इदानीं स्वकृतं सर्वमपि यज्ञादिकं हरौ समर्पयेदित्याह - *इष्टमिति* । इष्टं यजनम्, इच्छाविषयं सकलं वा । दत्तं सत्पात्रे धनत्यागाख्यं दानम् । हुतम् अग्नौ [5]होम्यप्रक्षेपरूपम् औपासनादि । जप्तं गायत्र्यादिमन्त्रैर्यज्जपति । पूर्तं तटाकाराम[6]प्रपास्थान -

---

१. स्वेहर्थ्ये ग. २. विष्णुंदो हासादि क. ३. पापादेराकल्यं ग.
४. प्रदक्षिणकृता नून ग. ५. होमं ग. ६. पापस्थानं क.

निर्माणादिकम् । आत्मनः स्वस्य प्रियं भोज्यमन्नपानादिकम् प्रियानिति दारादित्रयविशेषणम् । पत्न्यादिकं सर्वं परस्मै सर्वोत्तमाय हरये सन्निवेदयेत् । 'प्राण-देह-मनः-ख-आत्म-गेह-अपत्य-धनादयः । यत्सम्पर्कात् प्रिया आसन् ततः कोन्वपरः प्रियः' इति ज्ञात्वा, हरे सर्वं त्वदीयमेव, [1]न मम किञ्चित् । अहं तु तव दास इति ज्ञानं सन्निवेदनं तत्कुर्यादित्यर्थः ।

तथा चोक्तमेकादशे स्कन्धे (11.3.18) -

इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ।।

इति । अत्र परस्मै - सर्वदेवोत्तमाय निवेदयेत् इत्यनेन तत्र तत्र [2]कर्मस्वन्येऽपि देवा हूयमानाः सन्ति । तथापि तेषामपि सत्तादिप्रदो हरिरस्तीति मुख्यतया तस्मै निवेदयेत् इति असूचि । तदुक्तं भागवते - 'यथा तरोर्मूलनिषेचनेन' इति ।

*( अथ तीर्थधारणप्राशनादिक्रमः )*

अथ तीर्थधारणप्राशनादीनि सङ्क्षेपशास्त्रत्वादनुक्तान्यपि ग्राह्याणि । कृष्णामृतमहार्णवे -

[3]स्नाने पादोदकं विष्णोः पिबन् शिरसि धारयेत् ।
सर्वपापविनिर्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ।।
विष्णोः पादोदकं पूर्वमासिच्य तु शिरोमुखे ।
नेत्रे च त्रिः पिबेत् पश्चात् तापत्रयनिवारणम् ।।

इति ।

*( तीर्थशब्दार्थः )*

पाद्मे -

तीकारो दैत्यनाशाय थकारो मोक्षसाधनम् ।
अक्षरद्वयसंयुक्तं तीर्थनाम [4]सहोच्यते ।
आजन्मकृतपापानां प्रायश्चित्तं यदीच्छसि ।
शालग्रामशिलावारि पापहारि निषेव्यताम् ।।

---

१. न मम किञ्चित् इति क कोशे नास्ति । २. कर्ममध्ये क.
३. स्नानपादोदकं विष्णोः ... ४. सतोच्यते क.

*( तीर्थप्राशनक्रमः )*

वस्त्रं च त्रिगुणीकृत्य पाणौ पाणिं च विन्यसेत् ।
तस्मिन् तीर्थं प्रतिष्ठाप्य त्रिः [1]पिवेच्छब्दवर्जितम् ।
आद्यं कायस्य शुद्ध्यर्थं द्वितीयं धर्मसाधनम् ।
तृतीयं मोक्षदं प्रोक्तमेवं तीर्थं त्रिधा पिवेत् ।
[2]परमाणुसमं तीर्थं यश्च भूमौ विनिक्षिपेत् ।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ।। इति

*( एकादश्यां विनैव तुलसीदलेन एकवारं तीर्थं स्वीकरणीयं । हरये न किमपि फलादि निवेदयेत् )*

तुलसीमिश्रितं तोयं एकादश्यां कदाचन ।
न ग्राह्यं विष्णुभक्तैश्च व्रतं नश्येच्च पार्वति ।।

एकादश्यां नैवेद्यनिषेधो वाराहे -

एकादशीव्रतं नश्येत् नैवेद्यस्यार्पणान्मम ।
अन्नं वा [3]फलमूलं वा जलं वा मे प्रयच्छति ।
पूजाकाले मम दिने हृदि शल्यं तदर्पितम् ।। इति

अन्यत्र च -

एकादशीदिने देवी जलान्नादिसमर्पणम् ।
[4]मूत्रविट्सममेव स्यात् इत्युक्तं ब्रह्मणा पुरा ।।[5] इति ।

---

१. पिवेत् शुद्धवर्जितम् क.   २. परमाणो रमा तीर्थं ग.
३. फलमालां वा क.   ४. मयविष्टसमानं ग.
५. उक्तं भरद्वाजसंहितायाम् -

एकादश्यां न होतव्यं पक्षयोरुभयोरपि ।
नाग्निहोत्रं न च श्राद्धं नित्योपासनमेव च ।
न तत्र विधिलोपः स्यात् जयन्त्यां हरिवासरे । इति ।

विष्णुधर्मे -

विष्णोरहनि सम्प्राप्ते पक्षयोरुभयोरपि ।
नान्नं दद्यात् जलं वाऽपि न होतव्यं सुरादिषु ।। इति ।

माधवीयेऽपि -

( एकादश्यां न कदाचित् श्राद्धं कुर्यात् )

## अथैकादशी श्राद्धनिर्णयः - एकादशी - द्वादशी - त्रयोदशीति 'दिनत्रयाणां

---

वैश्वदेवं बलिं वाऽपि नित्यहोमं तथैव च ।
तर्पणं पितृदेवानां वर्जयेद्धरिवासरे ।।

वराहपुराणे च -

गुडोदकं चेक्षुदण्डमापो मूलं धृतं पयः ।
मुद्गश्च कदली चैवाव्रतघ्नस्याष्टकं विदुः ।
अष्टौ तान्यव्रतघ्नानि यानि जिघ्रन् हरेर्दिने ।
मलमूत्रपुरीषादिभक्षणं कृतवानसौ ।।

विष्णुधर्मोत्तरे च -

अन्नं समर्पयेद् मह्यं यस्तु मद्वासरे शुभे ।
तस्याऽपि निरयः प्रोक्तः किं पुनर्भोजने कृते । इति ।
अन्नं निवेदयेत् विष्णोः सम्प्राप्ते हरिवासरे ।
तस्याऽपि निष्कृतिर्नास्ति किमु तद्वासराशिनः । इति ।

तथा -

यावन्तस्त्रिषु लोकेषु विद्यन्ते पापराशयः ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।
अतस्तस्मिन् दिने गन्धमप्यन्नस्य विवर्जयेत् ।
तण्डुलोऽग्न्यंबुसंयोगात् पिष्टं लवणयोगतः ।
फलं त्रितयसंयोगात् अन्नं भवति तत्क्षणात् ।

एतत्प्रमाणपर्यालोचने एकादश्यां नान्नादि किञ्चित् समर्पयेत् इति विज्ञायते । क्वचिदाकरेषु फलादि समर्पणमेकादश्यां न प्रतिपिद्धमिति श्रूयते । यथा -

इक्षुर्विकारास्तस्य स्युर्यावन्तः केवलस्य च ।
खर्जूरं नालिकेरं च प्रियालपनसादिकम् ।
आम्रं च कदली द्राक्षा क्षीरं दधि घृतं तथा ।
अनिषिद्धानि मूलानि तथा कन्दादिकं च यत् ।
विनोदकेन यत्पक्वं धान्यं यच्च घृतादिना ।
एतानि फलसंज्ञानि विष्णोरेकादशीदिने ।। इति
समर्पणीयानि - - - - - - - - - - - - - ।

एवं अन्नसमर्पणेऽपि न दोष इति तत्र तत्र श्रूयते । अत्रैके विरोधमेवं परिहरन्ति - स्वयंव्यक्तदिस्थलेऽन्ननैवेद्यं कार्यम्। गृहार्चादौ तु फलादिकमेव निवेदनीय / तथाऽपि वाराहादौ फल-जलादि समर्पणस्यैकादश्यां प्रतिषिद्धत्वेनैकादश्यां न किमपि समर्पणीयमिति सम्प्रदायविदः ।

१ दिनत्रये

श्राद्धं द्वादश्यामेव कार्यम् । तथोक्तं नरसिंहपुराणे -

साधनद्वादशी यत्र कलामात्राधिका भवेत् ।
तदा दिनत्रयश्राद्धं द्वादश्यामेव कारयेत् ।। इति ।

तत एव -

एकादश्यां त्रयोदश्यां द्वादश्यां प्रतिवार्षिकम् ।
द्वादश्यां वैष्णवैः कुर्यात् अन्यैश्चैव मृतेऽहनि ।।

इत्यपि साधनीविषयम् ।

नन्वेकादशीश्राद्धमेकादश्यामेव कर्तव्यम्, न द्वादश्याम् । 'मृतेऽहनि अतिक्रान्ते चण्डालाः कोटिजन्मसु' इति प्रत्यवायश्रवणादिति चेन्न ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।
वरं स्वमातृगमनं वरं [1]गोमांसभक्षणम् ।
वरं हत्या सुरापानं [2]एकादश्यान्नभक्षणात् ।
गर्भिणी सूतिका वालास्तीर्थयात्राकृतश्रमाः ।
सपादमात्रं कुर्वीत तृप्त्यर्थं फलभक्षणम् ।
सर्वथा नान्नमश्नीयाद् म्रियमाणो हरेर्दिने ।

इति वाराहे अन्नस्यैकादशीदिने निषिद्धत्वात् तद्वाक्यमेकादश्यतिरिक्तमृताहातिक्रम एव प्रत्यवायप्रतिपादनपरम् ।

ननु तर्हि '[3]जलैर्वा पयसा वाऽपि पितॄणां तृप्तिमाप्नुयात् । न तु नित्यस्य लोपोऽस्ति पैतृकस्य विशेषतः ।' इति वचनाज्जलादिना पितृश्राद्धं किं न स्यात् इति चेन्न । जलादेरपि अन्नवत्प्रतिषिद्धत्वेन [4]अन्नसमानयोगक्षेमत्वेन तैरपि स्वपैतृककरणस्य निषिद्धत्वात् । तथा च तिथिदर्पणे -

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
अनेन विधिवाक्येन तत्र श्राद्धं परेऽहनि ।
भुङ्क्ष्व भुङ्क्ष्वेति यो ब्रूयात् सम्प्राप्ते हरिवासरे ।
तावुभौ पतितौ स्यातां तस्मात् श्राद्धं परेऽहनि ।

---

१. गोमेधभक्षणम् ग.    २. एकादश्यां न भक्षणम् ग.
३. तिलैर्वा क.    ४. अन्नक्षामत्वेन क. ग.

यथाऽशौचादिके श्राद्धमाशौचान्ते विधीयते ।
तथा एकादशीश्रीद्धं तत्कुर्यात्तदनन्तरम् ।। इति
ये कुर्वन्ति महीपाल श्राद्धं त्वेकादशीदिने ।
त्रयस्ते नरकं यान्ति दाता भोक्ता परे तथा ।। इति

साधनद्वादश्यां श्राद्धं कर्तुं द्वादशीलङ्घनप्रत्यवाय इति चेन्न । श्राद्धे निमन्त्रितब्राह्मणैः साधनी साधिता चेत् [1]यजमानेनाऽपि श्राद्धकर्त्रा साधितेति न तस्य द्वादशीलङ्घनप्रत्यवाय इति ।

यथोक्तं वाराहे -

द्वादश्यां यदि स्वल्पायां पितुश्श्राद्धं भवेद्यदा ।
ब्राह्मणान् भोजयित्वादौ स्वयं फलमवाप्नुयात् ।
न तस्य व्रतहानिः स्याद् भुञ्जानस्य ततः परम् ।। इति

अन्यत्र -

श्राद्धे नियुक्तैर्विप्रैस्तु द्वादशी परिपालिता ।
तत् फलं श्राद्धकर्तुश्च न तस्य व्रतलङ्घनम् ।। इति
स्वभर्तृपारणेनैव नारीणां पारणं भवेत् ।
पतिव्रतानां नारीणां एवं न व्रतलङ्घनम् ।
अशिरस्कं तु यत् स्नानं पत्युरुच्छिष्टभोजनम् ।
द्वादशीलङ्घनं चैव कुलस्त्रीणां न दुष्यति ।। इति

ननु किमुद्दिश्य श्राद्धं क्रियते । पितॄन् इति चेन्न । पित्रादयः स्वकर्मवशान्नानायोनिगताः [2]नानाविधदेशान् प्राप्ताः सन्तोऽत्र कथं भोक्ष्यन्ति । अतः कथमुद्देश्या इति । सत्यम् । अत्र पितृशब्देन न केवलं प्रमृताः पुरुषमात्रा अभिधीयन्ते । किन्तु नवश्राद्धादिसपिण्डान्तैः संस्कारैः प्रमीतानां वस्वादिलोकप्राप्तिः क्रियते । तल्लोकाभिमानिदेवता वस्वादयोऽत्र [3]पितृशब्देनाभिधीयन्ते । ते तु वस्वादयः प्रमीतानां पुत्रैः प्रत्यहं प्रतिमासं वा संवत्सरश्राद्धैस्तृप्ताः सन्तो [4]नानालोकनानायोनिगतान् अपि तत्पितॄन् तज्जातिगुणाहारेण तर्पयन्तीति नानुपपन्नम् । ते वस्वादयो मन्त्रादिकमाहाराणां नेतारं कृत्वैव तन्मुखेन स्वयं प्रीताः प्रीणयन्तीति ।

---

१. यजमानेनाऽपि इति क कोशे नास्ति । २. नानाविधाशान् क.
३. पितृशब्दे न धीयन्ते क. ४. नानालोकेति क कोशे नास्ति ।

तथा चोक्तं मत्स्यपुराणे -

नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।
श्राद्धस्य मन्त्रा उद्देश्याः उपभोग्यानि भक्तितः ।
नामगोत्रतयोद्देश्यान् भवान्तरगतानपि ।
प्रीणयन्ति मनुष्यादीन् [1]तदाहारत्वमागतान् ।
देवो यदि पिता जातश्शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति ।
देवत्वे भोग्यरूपेण पशुत्वेऽपि तृणं भवेत् ।
श्राद्धान्नं वायुरूपेण [2]नागत्वेऽप्यनुगच्छति ।
पानं भवति यक्षत्वे गृध्रत्वेऽपि तथाऽऽमिषम् ।
दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ।
मानुषत्वेऽन्नपानादि नानाभोगकरं तथा ।
या तु पिण्डक्रिया तत्र ब्राह्मणानां तु भोजनम् ।
यजमानस्य पित्रादीन् तदन्नमुपगच्छति ।
यथा गोष्ठे विसृष्टो वै वत्सो विन्दति मातरम् ।
एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन् ।। इति ।

साधनीद्वादश्यां कर्मकरणयोग्यकालो वाराहे -

त्रयो [3]भागास्त्रियामायास्तत्राद्यौ संत्यजेद् बुधः ।
भागे तृतीये स्नात्वा तु नित्यकर्माणि कारयेत् ।
आमाध्याह्निककर्माणि रात्रावेव विधाय च ।
यदा सूर्योदयात् पूर्वं घटिकैकावशिष्यते ।
स वै सूर्योदयो नाम मुनिभिः परिकीर्तितः ।
होमं च वैश्वदेवं च ब्रह्मयज्ञं च तर्पणम् ।
[4]आपोशनं विधायैव प्रतीक्षेद् रविदर्शनम् ।
साधनीयाऽतियत्नेन ततस्सा साधनी मता ।। इति
अल्पायामपि भूपाल द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्या दानहोमादिसंयुता ।। इति

१. तदाघारत्व क.  २. नाकत्वे ग.
३. [illegible] ग.  ४. [illegible] क.

भविष्यत्पुराणे -

सङ्कटद्वादशीप्राप्तौ नित्यमाह्निकमेव च ।
तत्राह्नि पारणं कृत्वा स्वकाले चाह्निकं भवेत् ।

इति तु पराधीनविषयम् । तथा च वाराहे -

[1]द्वादश्यामतिसूक्ष्मायां पराधीनस्तु यो जनः ।
स तीर्थपारणं कृत्वा द्वादशीफलमाप्नुयात् ।
अशिता अनशिता आपो व्रतपूर्त्यै बुधैः स्मृताः ।।

हरिवासरे कर्मकालः । वाराहे -

प्रातःकाले तु द्वादश्यां यदा स्याद्धरिवासरः ।
तदा कुर्वीत होमादि व्यतीते हरिवासरे ।।
तर्पणं श्राद्धहोमादि नित्यं नैमित्तिकं तथा ।
कुर्वीत जलपानादि व्यतीते हरिवासरे ।। इति । १२ ।

२. *प्रकाशिका*

एवं मध्याह्ने देवपूजां कृत्वा वैश्वदेवं कार्यमित्याह - *वैश्वदेवम्* इति । वैश्वदेवहोमः । तदुत्तरं सर्वं बलिशब्देन ग्राह्यम् ।

वैश्वदेवस्य पूजानन्तर्यं नृसिंहपुराणे उक्तम् -

'पौरुषेयेन सूक्तेन पूतो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद् बलिकर्म तथैव च ।।' इति

तच्च कालद्वयेऽपि कर्तव्यमित्याह कात्यायनः -

सायंप्रातर्वैश्वदेवः कर्तव्यो बलिरेव च ।
[2]अनश्नताऽपि सततं अन्यथा किल्बिषी भवेत् ।।

कूर्मपुराणे -

शालाग्नौ लौकिके वाऽथ जले भूम्यामथाऽपि वा ।
वैश्वदेवः प्रकर्तव्यो देवयज्ञः स वै स्मृतः ।।
यदि स्याल्लौकिके पाकस्ततोऽन्नं [3]तत्र हूयते ।

---

१. द्वादश्या मति सूक्ष्मा चेत् ख. २. अनिच्छतापि क. ३. यत्र क.

शालाग्नौ चेत् पचेदन्नं तस्मिन् होमो विधीयते ।

*( वैश्वदेवे प्रधानाभावे गौणा अप्यधिकारिणः )*

गौणकर्तृनाह अत्रिः -

पुत्रो भ्राताऽथवा ऋत्विक् [1]शिष्यश्वशुरमातुलाः ।
पत्नी श्रोत्रिययाज्याश्च दृष्टास्ते वलिकर्मणि ।।

गृहे कर्त्रन्तराभावे प्रवसता स्वयं कर्तव्यमित्याह वोधायनः -

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ।। इति ।

वैश्वदेवद्रव्याण्याह वोधायनः -

पयोदधिघृतैः कुर्यात् फलशाखोदकादिभिः ।
अलाभे येन केनापि काष्ठमूलतृणादिना ।
जुहुयात् सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् ।
शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
[2]सङ्कालयेद्यदाहारः तेनैव जुहुयादपि ।
उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् ।
[3]संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविम् ।। इति ।

तत्रायं क्रमः -

पश्चादग्नेरुपविश्य प्राणायामत्रयं कृत्वा अग्निस्थमुख्यप्राणान्तर्गत नारायणप्रेरणया, प्रीत्यर्थं पञ्चमहायज्ञानहं करिष्ये । देवान् - भूतान् - पितृन् - मनुष्यान् - विश्वेदेवानन्नेन यक्ष्य इति सङ्कल्प्य जुहुयात् । स्वस्वशाखोक्तक्रमेण हविर्दानं कर्तव्यम् । तथा च वसिष्ठः -

हरेर्नैवेद्यशेषेण पञ्चयज्ञांस्तु कारयेत् ।
लौकिके वैदिके वाग्नौ [4]देवेज्यं जुहुयाद्धविः ।।

तथा च पञ्चरात्रे -

विष्णोर्नैवेद्यशेषेण वैश्वदेवं करोति यः ।

---

१. शिष्यश्चाशुतमारुताः ग. २. संक्षालयेद् ग. ३. सङ्गता ख. ४. देवेड्यं ख.

तेन तृप्तीकृता देवाः हरिश्चापि [1]प्रतोषितः ।
पितृणां द्वारपालानां भूतानां च विशेषतः ।
वायसानां च तद्देयं तदानन्त्याय कल्पते ।
परान्नं पायसं भक्ष्यं अपक्वान्नं तथैव च ।
पितृशेषं तथोच्छिष्टं वैश्वदेवे न कारयेत् ।
कोद्रवं [2]वरकं माषं मसूरं च कुलित्थकम् ।
क्षारं सलवणं सर्वं वैश्वदेवे विवर्जयेत् ।
शुष्कमन्नं कुष्टकरम् उष्णं व्याधिकरं तथा ।
अत्युष्णं कररोगं च लवणान्नं कुलक्षयम् ।

आदौ विष्णुमुद्दिश्य वैष्णवैर्मन्त्रैराज्यद्रव्येणाष्टोत्तरशतमाहुतीर्हुत्वा पश्चाद् वैश्वदेवः कार्यः । अन्यथा प्रत्यवायश्रवणात् ।

तथा च पञ्चरात्रे -

विष्णोराहुतिमुत्सृज्य वैश्वदेवं करोति यः ।
देवतास्तन्न गृह्णन्ति तस्य यज्ञो निरर्थकः ।
[3]परिषिच्य परिस्तीर्य समिद्धेऽग्नौ विनिक्षिपेत् ।
अथ आज्याहुतीर्हुत्वा शतमष्टोत्तरं बुधः ।
अष्टाक्षरेण मन्त्रेण पुंसूक्तेन च षोडश ।
ततो व्याहृतिभिर्हुत्वा वैश्वदेवं ततः परम् ।
विष्णोर्नैवेद्यशेषेण आदाय द्विजसत्तमः ।
तत्पात्रं निक्षिपेदग्नौ त्रिःप्रोक्ष्येन्मन्त्ररत्नवित् ।
त्रेधा विभज्य [4]तच्चान्नं [5]प्रोक्षयित्वा च वाग्यतः ।
स्वशाखोक्तेन विधिना वैश्वदेवं समाचरेत् ।
हविर्यदेकपात्रं स्यात् मध्ये दैवं तथोत्तरे ।
भूतिकं पैतृकं दक्षे मानुषं चान्यपात्रके ।

तथा च व्यासः -

जुहुयात् सर्पिषा युक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पायसाभ्यक्तं तदभावेऽम्भसाऽपि वा ।

---

१. प्रतापितः क. २. दरकं ख. ३. परिष्वज्य ख.
४. पञ्चान्नं ख. ५. मोक्षयित्वा क.

पर्यग्निकरणं कुर्यात् सिद्धान्नस्याप्ययं विधिः ।। इति तुलसीमिश्रितं कुर्यात् । तदुक्तं पञ्चरात्रके -

तुलसीं विना तु यः कुर्याद् वैश्वदेवं दिने दिने ।
देवतास्तन्न गृह्णन्ति गृह्णन्ति [1]ब्रह्मराक्षसाः ।।
वदरीफलमात्रं तु [2]अवदानं तु कल्पयेत् ।
स्वाहाकारं चतुर्थ्यन्तं वामहस्तं हृदि स्थितम् ।
मध्यभागस्थितान्नेन देवयज्ञं समाचरेत् ।
उत्तरेण तु भागेन भूतयज्ञं समाचरेत् ।
दक्षिणेन तु भागेन पितृयज्ञं समाचरेत् ।
एवं यः कुरुते यज्ञान् स नरो नैति किल्विषम् ।।

अथ भूतयज्ञविधिः । तत्र शौनकः -

*( वलिहरणे आकारविशेषेण फलविशेषः )*

आयुष्कामी दिवारात्रौ स्रुवाकारं वलिं हरेत् ।
आयुरारोग्यकामी वा ध्वजाकारं वलिं हरेत् ।
मृत्युरोगविनाशार्थी [3]नराकारं वलिं हरेत् ।
जनं वशीकर्तुकामी मकराख्यं वलिं हरेत् ।
आयुरारोग्यमैश्वर्यपुत्रविद्यापशून् प्रति ।
श्रीकामधनमोक्षार्थी चक्राकारं वलिं हरेत् ।

तत्प्रकारः प्रयोगपारिजाते उक्तः -

प्रागादि ईशानपर्यन्तं नैरन्तर्येण अङ्गुल्यग्रैः वदरीफलमात्रान्नं घृताभ्यक्तं [4]सूर्यादिवास्तुदेवतापर्यन्तं प्रादक्षिण्येन वर्तुलं कृत्वा वलेः प्राक् इन्द्रायेति हुत्वा, इन्द्रात् प्राक् इन्द्रपुरुषेभ्यो हुत्वा, वलेर्दक्षिणतो यमाय हुत्वा, यमात् प्राक् यमपुरुषेभ्यो हुत्वा, वलेः पश्चाद् [5]वरुणाय, वरुणात् प्राक् वरुणपुरुषेभ्यो हुत्वा, वलेरुत्तरतः सोमाय, सोमात् प्राक् सोमपुरुषेभ्यो हुत्वा चक्रमध्ये ब्रह्मणे हुत्वा, ब्रह्मणः प्राक् ब्रह्मपुरुषेभ्यो हुत्वा, ब्रह्मणो दक्षिणतः विश्वेभ्यो देवेभ्यो हुत्वा, ब्रह्मणः पश्चिमतः सर्वेभ्यो भूतेभ्यो हुत्वा, ब्रह्मण उत्तरतः [6]दिवाचारिभ्यो

---

१. वहुराक्षसाः ख. २. अनुदानं क. ३. दराकारं ख.
४. सर्वादि क. ५. वारुणाय क. ६. देवचारिभ्यो ख.

नक्तञ्चारिभ्यो वा हुत्वा, चक्राद् वहिरीशान्यां रक्षोभ्यो हुत्वा, चक्राद् वहिराग्नेय्यां स्वधा पितृभ्य इति सोदकमन्नं दत्वा, उपवीती पितृतीर्थेन चक्रान्नैरृत्यां शामाय दत्वा चक्राद् वायव्यां शवलाय दद्यात् ।

चक्राकारेण यो विप्रः सदा भूतवलिं हरेत् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ।
यस्य पञ्चमहायज्ञाः प्रवर्तन्ते दिवा निशि ।
तद्गृहे सर्वतीर्थानि सदा तिष्ठन्ति शौनक ।
कुर्वीत स्नातकोऽप्येवं पृथक् पाको भवेद्यदि ।
एवं न क्रियते येन यस्याग्रे वा न दीयते ।
द्विजातिभिर्न भोक्तव्यं भुक्त्वा सान्तपनं चरेत् ।
देवयज्ञान्नशेषेण गृहद्वारादि पूजयेत् ।
[1]भूतयक्षान्नशेषेण वायसेभ्यो वलिं हरेत् ।
चण्डालपतितादिभ्यो पितृयज्ञान्नशेपतः ।
अन्यथा व्यर्थमेव स्याद् देवद्रोही भवेन्नरः ।
हुतशेषो न दातव्यो वायसेभ्यः कदाचन ।
यदि दद्याद् द्विजो नैव हुतं तस्य यथा भवेत् ।
वहवो यत्र पाकास्युरेकस्मिन्नधिकारिणि ।
तदा गृहपतेः पाको कर्म स्याद् वैश्वदेवकम् ।
व्रह्मयज्ञो दैवयज्ञः पितृयज्ञस्तथैव च ।
भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ।
अध्यापनं व्रह्मयज्ञः पितृयज्ञस्तु [2]तर्पणम् ।
होमो दैवो वलिर्भौतः नृयज्ञोऽतिथिपूजनम् ।
अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अहुत्वा च क्रिमिं भुङ्क्ते असाक्षी विषमश्नुते ।
अनुद्धृत्य वलिं दृष्ट्वा प्राणायामान् षडाचरेत् ।
स्वयमुद्धृत्य चेत्सैव प्राजापत्यं समाचरेत् ।
पत्नीपुत्रकुमारीभिः शिष्येभ्यस्तु स्ववन्धुभिः ।
वलेरुद्धरणं कुर्यात् नान्यैः कुर्यात्कथञ्चन ।

---

१. घूतयज्ञान्न क.
२. तर्पणम् ख.

ऋष्यशृङ्गः -

गवां ग्रासं च कुर्वीत नित्यमेव दिने दिने ।
गवां कण्डूयनं स्पर्शं ग्रासमाह्निकमेव च ।
सौरभेय्यः [1]सर्वहिताः पवित्राः पापनाशनीः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ।। इति

मार्कण्डेयपुराणे -

एवं गृहे वलिं कृत्वा गृहे गृहपतिः शुचिः ।
[2]आप्यायनाय भूतानां कुर्यादुत्सर्गमादरात् ।।

कूर्मपुराणे -

श्वभ्यश्च श्वपरेभ्यश्च पतितेभ्यस्तथैव च ।
दद्याद् भूमौ वहिस्त्वन्नं पक्षिभ्योऽथ द्विजोत्तमः ।।

अन्नोत्सर्गमन्त्रोऽपि विष्णुपुराणे दर्शितः -

देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसङ्घाः ।
प्रेताः [3]पिशाचास्तरवस्समंस्ता
ये चान्नमिच्छन्ति मया प्रदत्तम् ।।
पिपीलिकाकीटपतङ्गिकाद्याः
वुभुक्षिताः कर्मनिवन्धवत्यः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्यो निसृष्टं सुखिनो भवन्तु ।।
येषां न माता न पिता न वन्धुः
न चात्र सिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
ते यान्तु तृप्तिं मुदिता भवन्तु ।।
इत्युच्चार्य नरो दद्यात् अन्नं श्रद्धासमन्वितः ।
भुवि [4]भूतोपकाराय गृही सर्वाश्रयो यतः ।।

'सुखिनो भवन्तु' इति वचनात् ते विष्णुभक्ता एव कर्मवशात् तथाभूता

---

१. सर्गहिता क.   २. आध्यानाय ख.

३. [illegible] क.   ४. [illegible] क.

इति ज्ञायते । अवैष्णवानां सुखप्रार्थनस्य 'कष्टात् कष्टतरं यान्तु' इत्यादिना निषिद्धत्वात् ।

*(अतिथिः सर्वदा पूज्यः)*

अतिथिपूजाविधिः । तत्र वशिष्ठः -

भूतेभ्यश्च बलिं दद्यात् अतिथिभ्यस्तथैव च ।
तत्रागतेभ्यो विप्रेभ्यो दद्याच्छक्त्यनुसारतः ।
[1]चोरो वा यदि चाण्डालो ब्रह्मघ्नः पितृघातकः ।
वैश्वदेवे तु सम्प्राप्ते सोऽतिथिः स्वर्गसङ्ग्रहः ।
[2]दूरध्वोपगतो यस्तु वैश्वदेवे समागतः ।
अतिथिं तं विजानीयात् नातिथिः [3]पूर्वमागतः ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिगतो यदि ।
स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ।
तस्मात् तत्रागतान् [4]विप्रान् पूजयेदविचारयेत् ।
न पृच्छेत् गोत्रचरणे न स्वाध्यायं कथञ्चन ।
तत्र संस्थं हरिं ज्ञात्वा पूजयेदविचारयेत् ।।

'तत्र संस्थं हरिम्' इति वचनात् तान् वैष्णवान् लिङ्गतो ज्ञात्वा स्वरूपादिकमपृष्ट्वैव अन्नं दद्यात् । अवैष्णवानामपि दाने, 'नावैष्णवाय दातव्यं नोदविन्दुं न तण्डुलम्' इति वचनविरोधः स्फुटः। अवैष्णवेषु हरेः सम्यगवस्थानाभावादिति भावः। सम्यगवस्थानं नाम एते मदीया इति बुद्धिः।

'विशिष्टा वैष्णवा विप्राः गृहं प्रत्यागता यदि ।
प्रत्युद्गम्य प्रणम्याशु पूजयेत्तान् विधानतः ।
पादप्रक्षालनं कुर्यात् शुभे पात्रान्तरे द्विज ।
उपविश्यासने रम्ये मधुपर्केण पूजयेत् ।
[5]पूजयेदन्नपानाद्यैरतिथीन् श्रोत्रियान् द्विजः ।
[6]आसीमान्तमनुव्रज्य नमस्कृत्वा विसर्जयेत् ।
वैश्वदेवे कृते पश्चात् यद्यन्योऽतिथिरागतः ।
पुनः पाकं प्रकुर्वीत वैश्वदेवं न चाचरेत् ।'

सायं काले पुनः पाकः कर्तव्यः। 'अग्नये स्वाहा' 'नक्तञ्चरादिभ्यः

---

१. चारो क. २. दूराध्वन्यागतो क. ३. पूर्वगंत्वतः ख. ४. विद्वान् ख.
५. पूजयेदन्नपात्राद्यैः ख. ६. आशीर्मां तामनुव्रज्य ख.

स्वाहा' इति विशेषः ।

एकं तु भोजयेद् विप्रं पितॄनुद्दिश्य सत्तम ।
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ।। इति
सर्वान् पितृगणान् सम्यक् सदेवोद्दिश्य भोजयेत् ।
[1]आवाहनस्वधाकारपिण्डाग्नौ करणादिकम् ।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ।

इति *वैश्वदेवप्रकरणम्* ।

एवं प्रबोधादिवैश्वदेवान्तस्य कर्मणो भगवति समर्पणमाह - *इष्टमिति*। इष्टादिपदैर्यागदानहोमा उक्ताः । यागो मानसत्यागः । स एवाग्नौ प्रक्षेपावसानो होमः । दानं प्रसिद्धम् । जप्तं गायत्रीजपादि । पूर्तं तटाकनिर्माणादि । आत्मनः प्रियं [2]भोजनपानादि । अन्यच्च प्राणादिकं सर्वं भगवति सन्निवेदयेत्। भगवत्पूजासाधनमिति निवेदयेत् ।

यद्यदिष्टतमं लोके यच्चापि प्रियमात्मनः ।
तत्तत्समर्पयेत् मह्यं तदानन्त्याय कल्पते ।।

इति वचनात् । १२ ।

### ३. *तन्त्रदीपिका*

ततो वैश्वदेवः कर्तव्यः इत्याह - '*वैश्वदेवम्*' इति । अत्र केचित् - 'वैश्वदेवावसाने वा' इति ब्रह्मयज्ञकालोक्तेः 'कुर्यान्नित्यं तु तर्पणम्' इति पाठः । तत्र नियामकं, 'परस्मै सन्निवेदयेत्' इति अनुपदमेव वक्ष्यमाणत्वेन तदर्पणमित्यस्य का सङ्गतिरिति वदन्ति । एवमत्र सङ्गतिः । एतावत्पर्यन्तं [3]अधिदैवगतभगवदुपासनमुक्त्वा तद्भगवत्समर्पणमुक्तम् - 'कुर्यान्नित्यं तदर्पणम्' इति । इदानीं तु प्रायेणाधिभूतभगवदुपासनसमर्पणम् आह - 'इष्टं दत्तम्' इति ।

अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ।।

१. अवाहने स्वधाकारे॰ क. २. भजनदानादि ख. ३. अधिदैवोपासन क.

इति भागवततात्पर्ये । अन्यत् स्पष्टम् । तत्तदाश्रमानुसारेण यथायोग्यं वोध्यम् । वक्ष्यति च - 'वैश्वदेवं वलिं दन्तधावनं चाप्यृते वटोः' इति । [1]सन्निवेदयेत् दासत्वेनेति शेषः । १२ ।

*सदाचारस्मृतिः*

भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः ।
भुञ्जीत हृद्गतं विष्णुं स्मरंस्तद्गतमानसः ।
आचम्य मूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत् ।।१३।।

*१. आह्निककौस्तुभः*

यथाविधीत्यनुवर्तते । भगवतो हरेर्भुक्तशेषं मेध्यमेव भगवन्नैवेद्यं, भृत्याः, पोष्याः, अतिथयश्च पुरस्सराः पूर्वका यस्य स तथा । पोष्यवर्गैर्विप्रैश्च सहित इति यावत् । हृद्गतम् - हृदि स्थितम् । [2]आत्मान्तरात्मेतिनामकं विष्णुं मुख्यतः सारभोक्तारं स्मरन् अन्यत्र [3]मनोऽनाधाय विधिमनतिक्रम्य भुञ्जीत ।

"नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति यज्ञायुतकोटिपुण्यम् ।।"

अन्यत्र च अभ्यवहरेदित्यर्थः ।

*( भोजने दिङ्नियमक्रमादिनिरूपणम् )*

अथ भोजनविधिः । आदौ ब्राह्मण [4]ईशान्यकोणमारभ्य चतुरस्रमण्डलं कारयित्वा पीठे प्राङ्मुखत्वादिनोपविष्टः विहितविस्तीर्णपात्रेषु अन्नादि परिवेषयित्वा सव्यतः [5]प्रदक्षिणाकारेण करमध्यगेनैवोदकेन परिस्तीर्य चित्र-चित्रगुप्तनाम्नोरन्नं भूमौ निक्षिप्य - तद् विद्वांसः श्रोत्रियाः अशिष्यन्त आचमन्ति इति वृहदारण्यकरीत्या अमृतोपस्तरणमसि इति प्राश्य तुलसीमिश्रितान्नेन प्राणाद्या - हुतीर्दद्यात् । ततो मौनी प्रतिकवलं भगवत्स्मरणपूर्वकं [6]भुक्त्वोच्छिष्टभागधेयेभ्यः

---

१. तन्निवदयेत् क. २. आत्मान्तरात्मेति क कोशे नास्ति ।
३. मनं आधाय ख. ग. ४. इशे अन्यकाणे क. ५. दक्षिणा क. ग.
६. भुक्तो शिष्टभागेभ्यो क. ख.

सोदकमन्नं भूमौ निक्षिपेत् इति ।

तदुक्तं स्मृतिषु -

व्रह्माद्याश्च सुरास्सर्वे वशिष्ठाद्या महर्षयः ।
मण्डलं चोपजीवन्ति ततः कुर्वीत मण्डलम् ।
व्राह्मणस्य चतुरस्रं त्र्यस्रं वै वाहुजन्मनः ।
वर्त्तुलं तु विशः प्रोक्तं [1]शूद्रस्याभ्युक्षणं स्मृतम् ।
यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः ।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ।
यद्वेष्टितशिरा भुङ्क्ते यद् भुङ्क्ते दक्षिणामुखः ।
सोपानक्तः पिवन् भुङ्क्ते तद् वै रक्षांसि भुञ्जते ।
प्राग् वा प्रत्यङ्मुखो वाऽपि जान्वोरन्तकरः शुचिः ।
उदङ्मुखो वा पित्रेषु समासीनोऽभिपूजितः ।
[2]स्वर्णं रूप्यं च कांस्यं च पर्णं वा शास्त्रचोदितम् ।
चतुःषष्टिपलं कांस्यं तदर्धं पादमेव च ।
गृहिणामेव भोज्यं स्यात् ततो हीनं च वर्जयेत् ।
करमध्ये स्थिता देवाः [3]करपृष्ठे तु राक्षसाः ।
तस्मात् करस्य पृष्ठेन नान्नं कुर्यात् प्रदक्षिणम् ।
भोजनात् किञ्चिदग्रेऽन्नं धर्मराजाय वै वलिम् ।
चित्राय चित्रगुप्ताय प्रेतेभ्योऽप्युद्धरेद् वलिम् ।

इति वायुपुराणे लक्ष्मीसंहितायाम् ।

विष्णुतीर्थीये -

नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति [4]यज्ञायुतकोटिपुण्यम् ॥

इति । अन्यत्र च -

पादोदकं हरेः पुण्यं तुलसीदलमिश्रितम् ।
अमृतोपस्तरणमसीति प्राशयेत् कुशपाणिना ।

---

१. शूद्रस्यापीक्षणं क. २. स्वर्गं ख. ग.
३. करमूले ख. ४. यज्ञाच्युतकोटिपुण्यम् क.

उद्दिश्यैव हरिं प्राणान् जुहुयात् [1]सघृतं हविः ।
श्रद्धायां प्राणे निविष्ट इति मन्त्रैर्यथाक्रमात् ।
स्वाहान्ताः प्रणवाद्याश्च [2]नाममन्त्राश्च वायवः ।
जिह्वया च ग्रसेदन्नं दशनेन न संस्पृशेत् ।
तर्जनीमध्यमाङ्गुष्ठैः प्राणायेत्याहुतिर्भवेत् ।
मध्यमानामिकाङ्गुष्ठैः अपानायेत्यनन्तरम् ।
कनिष्ठानामिकाङ्गुष्ठैः व्यानायेत्याहुतिं ततः ।
कनिष्ठातर्जन्यङ्गुष्ठैः उदानायेति वै यजेत् ।
समानायेति जुहुयात् सर्वैरङ्गुलिभिः क्रमात् ।
चण्डालपतितोदक्या वाक्यं श्रुत्वा द्विजोत्तमः ।
भुञ्जीत ग्रासमात्रं तु दिनमेकमभोजनम् । इति ।

कात्यायनः -

"यस्तु पाणितले भुङ्क्ते यच्च [3]फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यच्च तस्य गोमांसवच्च तत् ।
शब्देनापोशनं पीत्वा शब्देन घृतपायसम् ।
शब्देनापः पयस्तक्रं सुरापानसमं स्मृतम् ।
[4]प्रत्यक्षलवणं चैव क्षीरं च [5]लवणान्वितम् ।
दधि हस्तेन मथितं तक्रं जीर्णमपेयवत् ।
उद्धृत्य वामहस्तेन यस्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यमेवमाह जनार्दनः ।
न क्रन्दयन् न च हसन् न बहिर्वा विलोकयन् ।
नाश्नीयात् प्रलपन् जल्पन् बहिर्जानुकरो न च ।
नाश्नीयात् भार्यया सार्धं पुत्रैर्वाऽपि न विह्वलः ।
बहूनां भुञ्जतां मध्ये नाश्नीयाच्च त्वरान्वितः ।
ग्रासशेषं न चाश्नीयात् पीतशेषं पिबेन्न तु ।
शश्वन्मूलफलादीनि दन्तच्छिन्नं न खादयेत् ।
अन्नं वृथा न विकिरेत् निष्ठीवेन्नातिकाङ्क्षया ।

---

१. सादृतं क. २. नमो मन्त्राश्च ग. ३. धूत्कार क.
४. प्रत्येकलावणं ग. ५. लवणऽन्वितम् क.

हस्तं प्रक्षाल्य गण्डूषं यः पिवेत् भोजनोत्तरे ।
दैवं पित्र्यं तथात्मानं तपस्स उपघातयेत् ।
[1]भोजनं तु न निश्शेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दधि सक्त्वाज्यं पललं क्षीरमध्वपः ।”

पललं मुद्गमिश्रितोदनम् ।

‘स्नास्यतो वरुणः शक्तिं [2]जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मात् मौनं त्रिषु स्मृतम् ।’

वाशिष्टे -

एवं भुक्त्वा विधानेन पश्चात् सम्प्राशयेत् जलम् ।
‘अमृतापिधानमसि’ इति मन्त्रेणापो द्विजोत्तमः ।
किञ्चिदन्नमुपादाय पीतशेषेण वारिणा ।
पैतृकेन तु तीर्थेन भूमौ दद्यात् तदर्थिनाम् ।
उत्थाय सम्यगाचामेत् भोजनासनसंस्थितः ।
[3]मुद्गादिचूर्णैर्मृद्भिर्वा जलैः संशोधयेत् करौ ।
पश्चात् काष्ठैश्च गण्डूषैः वक्त्रं संशोधयेत् ततः । इति ।
चतुरष्टद्विषट्द्व्यष्टगण्डूषैः शुद्धिरिष्यते ।
मूत्रे पुरीषे भुक्त्यन्ते [4]तथैव मुखनिःसृतौ ।
गण्डूपकरणात् पूर्वं शूद्रादीन् यदि पश्यति ।
ज्ञानतोऽज्ञानतो वाऽपि तैः साकं भुक्तवान् द्विजः ।

इति स्मृत्युक्तरीत्या [5]द्वादशगण्डूषान् कृत्वा आचामेत् ।

तत्र स्मृतिः -

“आचान्तोऽप्यशुचिस्तावत् यावत्पात्रं न चोद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावत् यावद्भूमिर्न लिप्यते ।
भोजनोच्छिष्टभूमेस्तु गोमयेनोपलेपनात् ।
पश्चादाचमनं कुर्यात् [6]तत्पूर्वं रुधिरं भवेत् ।”

इति पञ्चसंस्कारे ।

---

१. भाजनं क.  २. जपतश्च हुताशनः क.  ३. मृग्दोदचूर्णैः ग.
४. ×××××× ग.  ५. दश ग.  ६. तत्सोऽयं ग.

हस्तप्रक्षालनोत्तरकर्तव्यमाह - *आचम्येति* । पाण्यादि प्रक्षाल्य द्विःशुद्धिमाचमनं कृत्वा मूलमन्त्रेण 'ओम् नमो नारायणाय' इत्यष्टाक्षरेण नारायणमन्त्रेण कोष्ठं - नाभिदेशमष्टवारमभिमन्त्रयेत् । तदुक्तं वाशिष्ठे 'द्विराचम्य विधानेन सुखासीनः स्मरेद्धरिम् ।' इति । ततस्तीर्थप्राशनमन्य - त्रोक्तमनुसन्धेयम् ।

' स्नाने [1]चाचमने चैव भोजनादौ यथाविधि ।
तथैव भोजनस्यान्ते सालग्रामजलं पिवेत् ।।'

इति विज्ञानेश्वरे । स्मृतिः -

भोजनानन्तरं विष्णोरर्पितं तुलसीदलम् ।
भक्षणात् पापनिर्मुक्तश्चान्द्रायणशताधिकम् ।। इति

।। १३ ।।

२. *प्रकाशिका*

ततो भोजनं कार्यमित्याह - *भुक्तशेषम्* इति । भोजनविधिस्तु मनुना दर्शितः ।

'उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः ।'

आचमननिषेधापवादमाहापस्तम्वः -

यस्तु [2]भोजनशालायां भोक्तुकाम उपस्पृशेत् ।
आसनस्थेन चान्यत्र स विप्रः पङ्क्तिदूषकः ।।

अन्यत्र - अनासनस्थो वा । तस्मात् मण्डलाद् वहिराचम्य आसनस्थो भवेत् इति भावः ।

भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चात् अवशिष्टं तु दम्पती ।

***याज्ञवल्क्यः*** -

[3]वालसुवासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्याश्च दम्पत्योः शेषभोजनम् ।।

***यमः*** -

विप्रः स्वर्गपरो नित्यं अर्चयेत् पितृदेवताः ।

---

१. वाचमने क.

२. भोजनवेलायां क. ३. सालासु वासिनावृद्धा क.

[1]गुरूनतिथिवालांश्व तर्पयेत् पूर्वमेव तु ।
आत्मानं तर्पयेत् पश्चात् नियतो वाग्यतः शुचिः ।
स्त्रीशूद्रं तर्पयेद् पश्चात् एष धर्मः सनातनः ।।

*(भोजने दिङ्नियमासनविशेषनिरूपणम्)*

*व्यासः -*

पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषां पञ्चार्द्रता मता ।

*वोधायनः -*

प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमधिष्ठितः ।

*प्रचेता वर्ज्यासनान्याह -*

[2]गोशकृन्मृन्मयं भिन्नं निम्वपालाशपिप्पलम् ।
लोहवद्धं सदैवार्द्रं वर्जयेत् आसनं वुधः ।।

*मनुः -*

प्राङ्मुखस्तु ततो विप्रः प्रतीच्यां वा यथासुखम् ।
उत्तरे पितृकार्येषु दक्षिणं तु विसर्जयेत् ।। इति ।।

*व्रह्माण्डपुराणे -*

उपलिप्ते समे स्थाने शुचौ [3]शुद्धासनान्विते ।
मण्डनं गोमयेन स्यादथवा गौरमृत्सया ।।

*शङ्खो विशेषमाह -*

चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ।।
चतुरस्रं [4]त्रिकोणं च वर्तुलं चार्धचन्द्रकम् ।
कर्तव्यमानुपूर्व्येण व्राह्मणादिषु मण्डलम् ।। इति

*शङ्खः -*

आदित्या वसवो रुद्राः व्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात् कुर्वीत मण्डलम् ।। इति

*मनुः -*

---

१. गुरूनतिथिवृद्धांश्च ख.  २. गोष्ठकृ क.
३. वद्धासना ख.  ४. द्विकोणं च क.

न पादौ धावयेत् कांश्ये कदाचिदपि भोजने ।
न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ।।

अत्र ताम्रादिभ्यः अतिरिक्तभिन्नभाण्डनिषेधः कृतः । ताम्र-रजत-सुवर्ण-शङ्ख-मुक्ता-अश्म- [1]स्फटिकानां भिन्नमभिन्नमिति पैटीनस्युक्तेः ।

'ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलान्विते ।
[2]पलाशपद्मपात्रेषु गृही भुक्त्वा व्रतं चरेत् ।'

इति वृद्धमनूक्तेः । वल्लीपलाश इति स्मृत्यर्थसारकृदुक्तेः । पद्मं - पद्मकाष्टम् ।

वटार्काश्वत्थपत्रेषु [3]कोविदारकरञ्जयोः ।
नाश्नीयात् कदलीगर्भेऽष्टदण्डयुते दले ।
रम्भापत्रे पलाशे च द्वादश्यां भोजने कृते ।
सप्तजन्मकृतं पुण्यं तत् क्षणादेव नश्यति ।।

*(चतुःषष्टिपलं सौवर्णादिपात्रं भोजने प्रशस्तम्)*

अथ भोजनपात्राणि ग्राह्याणि -

सौवर्णं रजतं वाऽपि विशुद्धं कांस्यमेव च ।
चतुःषष्टिपलं चैव कांश्यमुक्तं प्रमाणतः ।
तदर्धेनाऽपि कर्तव्यं ततो हीनं विसर्जयेत् ।
मधुपर्णं तथा रम्भापर्णं च ग्राह्यमेव च ।
औदुम्बुरं [4]मातुलङ्गं जम्बूपनसमेव च ।
तथा पुन्नागपर्णानि भोजने तु विशिष्यते ।
भिक्षां दद्यात् प्रयत्नेन यतये ब्रह्मचारिणे ।
विष्णुं प्रीणंस्तु भुञ्जीयात्तीर्थप्रासादपूर्वकम् ।
शङ्खादिकं पुरः स्थाप्यं भक्ष्यं भोज्यं च [5]वामतः ।
अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् ।
तण्डुलात्त्रिगुणं दुग्धं दुग्धार्धं जलमुत्क्षिपेत् ।
तदर्धं तु गुडं चूर्णं परमान्नमिति स्मृतम् ।
परिवेषितमन्नं तु तुलसीदलपूर्वकम् ।
प्रणवव्याहृतीभिश्च सावित्र्याऽभ्युक्ष्य चैव हि ।

---

१. XXXXXX क. २. पलाशपृथु क. ३. कावदार क.
४. मातृगलं ख. ५. वाम्यतः क.

तुलस्यास्तु रजोजुष्टं नैवेद्यस्य तु भक्षणे ।
कोटिजन्मकृतं पापं तत्क्षणादेव नश्यति ।

अत्रिः -

आसने [1]पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित् ।
मुखेन चान्नमंश्नाति तुल्यं गोमांसभक्षणम् ।।

मुखेन - पशुवत् । तथा -

एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो वलम् ।।

विष्णुधर्मोत्तरे -

अग्निकार्यं देवकार्यं उपस्पर्शनमेव च ।
भोजनं पितृकार्यं च [2]वहिर्जानु न कारयेत् ।

वोधायनः -

भोजनं हवनं दानं उपहारः प्रतिग्रहम् ।
वहिर्जानोर्न कार्याणि तद्वदाचमनं स्मृतम् ।
आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखस्त्वासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ।। इति
प्रशस्तशुद्धपात्रेषु भुञ्जीताकुपितो द्विजः ।

*(भोजने अनुसन्धानविशेषनिरूपणम्)*

ब्रह्मपुराणे -

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतत् इति भक्त्याऽथ वन्दयेत् ।
तत उदकेन अन्नं प्रदक्षिणीकृत्य अपः पिवेत् ।
करमध्ये स्थिता देवाः करपृष्ठे तु राक्षसाः ।
तस्मात् करस्य पृष्ठेन नान्नं कुर्यात् प्रदक्षिणम् ।
[3]स्वादोपितेव मन्त्रेण तदन्नमभिमन्त्रयेत् ।
परिषेचनं ततः कुर्यात् सत्यं त्वर्तेन वैदिकाः ।
निशि ऋतं त्वा सत्यनेति परिषेचनमाचरेत् ।
पात्रस्य दक्षिणे भागे भुवं सम्प्रोक्ष्य यत्नतः ।

---

१. पादमारोप्य २. महाजानुर्न ३. XXXXX तेति क. ख.

अन्नं सघृतमादाय वलिं तत्र विनिक्षिपेत् ।
प्राक्संस्थं प्रत्यक्संस्थं वा वलिं तत्र निधाय च ।
भोजनात् प्राक् तदन्नेन धर्मराजाय वै वलिम् ।
चित्राय चित्रगुप्ताय [1]प्रेतेभ्यश्च तमुद्धरेत् ।
हस्तप्रक्षालनं कृत्वा वलिं चैव विसर्जयेत् ।
चित्राहुतिप्रदाने तु स्वाहाकारं तु वर्जयेत् ।
नमः शव्देन कर्तव्यं तत् स्थानात्तु परित्यजेत् ।
भोजनादौ वलिं दत्वा तमग्नौ न विनिक्षिपेत् ।
[2]ग्रासे ग्रासे मलं भुङ्क्ते पितृहा सोऽपि जायते ।
भोजनादौ [3]वलेरन्नं यावद् भूमौ च तिष्ठति ।
अभोज्यं तद् भवेदन्नं तस्मात् स्थानात् त्यजेत् वुधः ।
पत्नीपुत्रकुमारीभिः शिष्यैर्वाऽथ स्ववन्धुभिः ।
वलेरुद्धरणं कुर्यात् नान्यैः कुर्यात् कथञ्चन ।
विष्णुविद्वेषिणो ये च ये च सज्जनदूषकाः ।
ये च वर्णाश्रमभ्रष्टाः ते वै पङ्क्तिवहिष्कृताः ।
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।। (भ.गी.15.14)
नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति यज्ञायुतकोटिपुण्यम् ।। (कृ.म.99)
[4]कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।
तत्फलं लभ्यते पुम्भिः विष्णोर्नैवेद्यभक्षणात् ।। (कृ.म.97)
पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ।। (कृ.म.96)
स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ।। (स.स्मृ.26)
सङ्कर्षणश्च प्रद्युम्नः तत्र भोक्तॄषु संस्थितौ ।

---

१. भूतेभ्यश्च क. २. ग्रामे ग्रामे ख. ३. वलिश्चान्नं ख.
४. कोटिन्दव क.

भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः ।
नारायणानिरुद्धौ च भोज्यवस्तुषु संस्थितौ ।
[1]तर्पकौ सर्वजीवानां तस्माद् भोग्यौ न चर्व्यतः ।
अवकाशप्रदो नित्यं वासुदेवो नभः स्थितः ।
एवं पञ्चात्मकं विष्णुं य उपास्ते सदा [2]विभुम् ।
अवकाशप्रदः सोऽपि [3]स्वजातीनां भविष्यति ।
शुभं पिवत्यसौ नित्यं नाशुभं स हरिः पिवेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ।

इत्याद्यनुसन्धाय अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयात्मकानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवनारायणात्मकश्रीविष्णुप्रीत्यर्थं प्राणाग्निहोत्रं करिष्य इति सङ्कल्प्य 'अमृतोपस्तरणमसि' इति मन्त्रेणोदकं प्राशयेत् । तच्चोदकं [4]उत्तरापोशनीयं च प्राणस्य वस्त्रद्वयमिति बुद्ध्या पिवेत् । तदुक्तं छान्दोग्यभाष्ये - पञ्चमप्रपाठके आदिमखण्डद्वये -

सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा ।
स्वार्थं समर्पयेद् विष्णौ यथा प्राणे सुराः पुरा ।
प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिवन् ।
स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ।। इति ।

तदनन्तरं 'ओम् प्राणाय स्वाहा प्राणात्मने अनिरुद्धाय इदं न मम' । एवं 'प्राणाहुती पञ्च हुत्वा हस्तं प्रक्षालयेत् ततः' ।

ब्रह्मग्रन्थिं समुत्सृज्य पुनः प्रक्षालयेत् करम् ।
श्रद्धायामिति वाक्यानि पञ्च जप्त्वा समाहितः ।
अमृतोपस्तरणमसीत्यपः पीत्वा विचक्षणः ।
प्राणेभ्यो जुहुयादन्नं व्यञ्जनक्षारवर्जितम् ।
घृतयुक्तं समादाय विधिवत्प्राणपञ्चकैः ।
तुलसीमिश्रितं चान्नं यो दद्यात् प्राणपञ्चके ।
शिक्थे शिक्थे भवेत्तस्य पुण्यं यज्ञशताधिकम् ।
घृतहीनं तु यो भुङ्क्ते नरस्त्वाहुतिपञ्चकम् ।

---

१. तारकौ ख. २. विदम् क. ३. स्वजातानां ख.
४. उत्तरापोशनीयं च इति क कोशे नास्ति ।

पश्चाद् घृतेन यो भुङ्क्ते स चान्द्रायणमाचरेत् ।
[1]आपोशनमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः ।
भुञ्जानस्तु यदा ब्रूयात् गायत्र्यष्टशतं जपेत् ।
हरिस्मरणमुत्सृज्य भोजनं षड्रसान्वितम् ।
शुनो मांसं [2]शुनोच्छिष्टं पितृभिः सह भुञ्जते ।
स्वाहान्ता प्रणवाद्याश्च नाम्ना मन्त्राश्च वायवः ।
जिह्वयैव ग्रसेदन्नं [3]दशनेन न संस्पृशेत् ।

वायवः - वायुदेवताकाः ।

तथा च -

आपोशनमकृत्वाऽथ यस्त्वन्नं परिमर्दति ।
मर्दितं चापि यच्चान्नं भुक्त्वा चान्द्रायणं चरेत् ।
भुजमानस्तु यो विप्रो पात्रं हस्तेन मुञ्चति ।
तदुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते [4]भुक्तभाजने ।।

मौनं च पञ्चप्राणाहुतिपर्यन्तं गृहस्थस्य ब्रह्मचारियतिवानप्रस्थानां सर्वत्र मौनमेव ।

तदुक्तं चन्द्रिकायाम् -

मौनमाचरते यस्तु सर्वस्मिन् भोजने द्विजः ।
स पापो भ्रातरं हन्ति सन्ततिञ्चाचिराद् ध्रुवम् ।
प्राणापाने तथा व्याने उदाने च समानके ।
पञ्च [5]प्राणाहुतीर्मौनं शेषं चोदरपूरणम् ।
प्राणाहुतीषु सर्वासु कृतास्वेवं त्यजेद् गृही ।
[6]पात्रस्य धारणं मौनं यावत्सिद्धिर्भवेत् भुजेः ।

गृहस्थस्य पञ्चप्राणाहुतिव्यतिरिक्तभोजने काष्ठमौननिषेधः । लोकिककर्मविषये मौनं कर्त्तव्यमेव ।

*(भोजने मधुराम्लादिरसस्वीकारे योग्यकालक्रमादिनिरूपणम्)*

तथा च विष्णुपुराणे -

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।

---

१. अपो नाशनकृत्वा तुं ख. २. शवोच्छिष्टं क. ३. दर्शनेन ख.
४. भक्त भाञ्जने क. ५. पञ्चाहुतिस्तथा माने क. ६. पत्रस्याभरणं ख.

लवणाम्लौ तथा मध्ये कटुतिक्तादिकान् ततः ।
प्राग् द्रवं पुरुषोऽश्नीयात् मध्ये च कठिणाशनम् ।
अन्ते पुनर्द्रवाशी च वलारोग्यं न मुञ्चति ।

तथा ग्रासनियममाहापस्तम्वः -

अष्टौ ग्रासा मुनेर्भक्ष्या षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थानाममितं व्रह्मचारिणः ।
जठरं पूरयेदर्धमन्नैर्भागं जलेन च ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ।

तथा पङ्क्तिभेदस्तु ( न कार्यः )

यद्येकपङ्क्त्यां विषमं ददाति
स्नेहाद् भयाद् वा यदि वार्थहितोः ।
वेदेषु गीतं मुनिभिश्च सत्यं
तद् व्रह्महत्यां मुनयो वदन्ति ॥
ग्रासशेषं न चाश्नीयात् पीतशेषं [1]पिवेन्न तु ।
यतिश्च व्रह्मचारी च विधवा या च गुर्विणी ।
सिद्धान्नं भुक्तमेतेषां तैः कृतं चातिनिन्दितम् ।
अवैष्णवं च यच्चान्नं पतितान्नं तथैव च ।
अनर्पितं तथा विष्णोः श्वमांससदृशं भवेत् ।
एकादश्यां तु यच्चान्नं यच्चान्नं [2]राहुदर्शने ।
जातकं मृतकं चैव गर्भाधानादि सप्त च ।
अनुप्रवचनं चैव भुक्त्वा चान्द्रायणं चरेत् ।
न वेष्टितशिरो वाऽपि नासनारूढपादवान् ।
वस्त्राद्यं तु परित्यज्य न च [3]मुक्तशिरोरुहः ।
न निधाय करं भूमौ न शिरोऽर्पितहस्तवान् ।
नाकाशे न शयानस्तु भुञ्जीयात्तु कदाचन ।
शव्देनापोशनं पीत्वा शव्देन घृतपायसम् ।
शव्देनापः पयस्तक्रं सुरापानसमं स्मृतम् ।
प्रत्यक्षलवणं चैव करेण लवणान्वितम् ।

---

१. न पाययेत् ख.　२. रहदर्शने क.　३. नक्तशिरोरुहः क.

दधि हस्तेन मथितं दीर्घतक्रं पिवेन्न तु ।
[1]उच्छिष्टोच्छिष्टसंस्पृष्टो[*]ब्राह्मणोऽब्राह्मणाद्यदि ।
तदन्नमपि भोक्तव्यं पुनरन्नं न भोजयेत् ।

शाण्डिल्यः -

नृणां भोजनकाले तु यदा दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय गायत्रीं मनसा स्मरेत् ।
पुनर्दीपान्तरं दृष्ट्वा तच्छेषं भोजयेद् द्विजः ।
पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।
[2]भुक्त्वोच्छिष्टं समादाय सर्वस्मात् किञ्चिदाहरेत् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद् भुवि ।

तत्र मन्त्रः -

रौरवे पुण्यनिलये [3]पद्मार्वुदनिवासिनाम् ।
अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ।
अमृतापिधानमसि मन्त्रेण च द्विजोत्तमः ।

श्रद्धायां प्राणेन विश्वामृतं हुतं प्राणमन्त्रेनाप्यायस्व । एवं समानमन्त्रेनेत्यन्तं अपां प्राशने श्लोकः ।

हस्तं प्रक्षाल्य गण्डूषं यः पिबेत् पापमोहितः ।
स दैवं च पितृव्यं च आत्मानं चैव सोऽहनत् ।
अर्धं पीत्वा च गण्डूषं अर्धं त्याज्यं महीतले ।
रसातलगता [4]नागा तेन प्रीणन्ति नित्यशः ।
अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ।
उत्थाय सम्यगाचामेत् भोजनासनसंस्थितः ।
मुद्गादिचूर्णमृद्भिर्वा जलैः संशोधयेत् करौ ।
काष्ठेन जलगण्डूषैः वक्त्रं संशोधयेत्ततः ।

तदनन्तरं कर्तव्यमाह - *आचम्येति* । द्विराचम्य विधानेन सुखासीनः

---

१. XXXXX क. २. XXXXX ख.
३. पद्मावंदरवासीनाम् ख. ४. नादा क.

स्मरेद् हरिम् । तथा च मार्कण्डेयः -

आचान्तोप्यशुचिस्तावत् यावत्पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावत् यावन्नो मृज्यते मही ।
ततो दक्षिणाङ्गुष्ठेन सर्वगात्राणि संस्पृशेत् ।
अङ्गुष्ठाग्रेण स्पृष्टव्यं नेत्रयोर्निक्षिपेज्जलम् ।

तत्र मन्त्रः -

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ।

एतदनन्तरं कर्तव्यमाह - '*मूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत्*' इति । कोष्ठमुदरम् ।

[1]भुक्त्वार्द्रमुखपाणिर्न व्रजेन्नैव श्रमी भवेत् ।
अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः ।। इति

*हारीतः* -

ततः शालग्रामोदके तुलसीनिर्माल्यं च भक्षयेत् ।
भोजनानन्तरे यस्तु शालग्रामशिलोदकम् ।
पिबेद्दोषविनिर्मुक्तः स याति परमां गतिम् ।
भोजनानन्तरे विष्णोरर्पितं तुलसीदलम् ।
भक्षणात्पापनिर्मुक्तः [2]चान्द्रायणशताधिकम् ।

ततस्ताम्बूलं भक्षयेत् । तत्र मार्कण्डेयः -

भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम् ।
सुपूगं च सुपत्रं च चूर्णेन च समन्वितम् ।
देवद्विजेभ्यो दत्वाऽथ ताम्बूलं भक्षयेत् सुधीः ।
एकपूगं [3]शुभारोग्यं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं च त्र्यधिकं नैव दुष्यति ।
पर्णमूले भवेत् व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेत् बुधः । इति ।
सर्वेषामेव यागानात्मयागः परः स्मृतः ।

---

१. भुक्त्वार्द्रपाणिः क.　　२. चन्द्रायणमतोधिकम् ख.
३. सुखारोग्यं क.

योऽनेन विधिना कुर्यात् स याति ब्रह्मणः पदम् ।। इति
।। १३ ।।

### ३. *तन्त्रदीपिका*

अध्यात्मभगवदुपासनाप्रकारं प्रायेणाह *भुक्तशेषम्* इति ।

'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासाः तव मायां जयेमहि ।।' (भा.11.6.46)

इत्युक्तेः। भृत्याः भरणीयाः ।

भरणीयानाह देवलः -

वृद्धौ च मातापितरौ पुत्रभ्रातृसुतादयः ।
बान्धवाश्च [१]परिक्षीणाः भृत्याद्याः सेवकास्तथा ।। इति
"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ।।"

इत्युक्तेरुभयोरनुल्लङ्घ्य नमस्कृत्य, हृद्गतभगवन्तं स्मरन्, तथा 'तद्गतमानसः' तेषु - भृत्यादिषु गते भगवति मानसं यस्य सः तद्गतमानसः।

सर्वैर्यद् भुज्यते चान्नं तत्र तत्र स्थितो हरिः ।
तद् भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतः सदा ।

तथा -

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ।।

इत्येवं तद्गतमानसः सन् भुञ्जीतेत्यर्थः । एतेन भोजनादौ पङ्क्तिभेदकरणमनर्थकमिति सूचितम् । एवं भोजनानन्तरं हस्तप्रक्षालनानन्तरं चतुरष्टद्विषट् द्व्यष्टगण्डूषैः शुद्धिरुच्यते । 'मूत्रे पुरीषे भोज्ये च मुखप्रस्रवणेषु च' इति विध्युक्तरीत्या आचमनं कर्तव्यमित्याह - *आचम्येति* । मूलमन्त्रेण स्वोदरं स्पृष्ट्वाऽभिमन्त्रणं कर्तव्यम् । तेन भुक्तसाफल्यं भवतीत्यर्थः। १३।

---

१. परक्षीणा क.

*सदाचारस्मृतिः*

*( वेद-शास्त्रश्रवणमननादिना कालं यापयेत् )*

**वेदशास्त्रविनोदेन प्रीणयन् पुरुषोत्तमम् ।**
**अहःशेषं नयेत् सन्ध्यामुपासीताऽथ पूर्ववत् ।।१४।।**

*१. आह्निककौस्तुभः*

भोजनानन्तरं [1]सायंसन्ध्यायाः कर्तव्यतामाह *वेदेति* । निर्णयानां वेदानां, निर्णायकानां शास्त्राणां च वेदानुसारिशास्त्राणां वा विनोदेन । नुद-प्रेरण इति धातोः । नुदः प्रेरणम् उच्चारणम् अभ्यास इति यावत् । अहःशेषं - उर्वरितभागं नयेत् । क्षणमप्यायुषं व्यर्थं न कुर्यादिति यावत् । क्षराक्षरोत्तमं हरिं प्रीणयन् प्रसादयन् अहःशेषं नयेत् ।

[2]दिवाकर्माण्युक्त्वा रात्रिकृत्यमाह - *सन्ध्यामिति* । अथ सूर्यास्तमयानन्तरं सन्ध्यामुपासीत । तत्रेतिकर्तव्यतामतिदिशति प्रातःसन्ध्यावत् सर्वं स्वस्वशाखारीत्या कुर्यादित्यर्थः । सन्ध्यानन्तरम् औपासनादि कुर्यादिति वाराहे । अथ पूर्ववदिति। अथशब्दः वैश्वदेवभृत्यभोजनादि [3]प्रमेयान्तरद्योतकः । औपासनवैश्वदेवादि पूर्ववदेव कुर्यादिति । तदुक्तम् -

भुक्त्वोपविष्टो विश्रान्तो ब्रह्म किञ्चिद् विचारयेत् ।
इतिहासपुराणानि स्वाध्यायं च पठेन्नरः ।
अस्तङ्गते दिनकरे सन्ध्यां कुर्वीत पूर्ववत् ।

इति विष्णुस्मृतौ ।

*(सायाह्नेऽपि औपासनं-वैश्वदेवश्च कर्तव्य एव)*

यदुपस्थकृतं पापं पद्भ्यां यच्च कृतं भवेत् ।
सायं सन्ध्यामुपस्थाय तेन तस्मात् प्रमुच्यते ।
सायमौपासनं हुत्वा [4]पश्चाद्धोमं समाचरेत् ।
आज्येन [5]चरुणा वाऽपि तिलैर्व्रीहिभिरेव वा ।
अतन्द्रितो हरिं ध्यायन् वैश्वदेवं समाचरेत् ।

इति हारीते ।

---

१. सायं सन्ध्याकर्तव्यमाह क. २. दिन्कर्माण्युक्तत्वा क.
३. प्रमेयान्तर इति ख कोशे नास्ति । ४. पश्च [illegible] ग. ५. [illegible] क.

सायं भोजने स्मृतिः -

सायम्प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यात् अग्निहोत्रसमो विधिः ।
आयुषे प्राङ्मुखो भुङ्क्ते यशस्वी दक्षिणामुखः ।
श्रियै प्रत्यङ्मुखो भुङ्क्ते न कदाचिदुदङ्मुखः ।। इति

पूर्वोदाहृतदक्षिणाभिमुखनिषेधस्तु जीवन्मातृकविषयः सारसङ्ग्रहकृतः ।

रात्रिभोजनापवादः -

रवौ पर्वणि सङ्क्रान्तौ [1]व्यतीपाते पितुर्दिने ।
अभ्यङ्गं चोपवासं च न कुर्यान्निशि भोजनम् ।। इति ।

अथ दिवातीतकर्मविधिः - स्मृतिसङ्ग्रहे -

दिवोदितानि कर्माणि प्रमादादकृतानि वै ।
शर्वर्याः प्रथमे यामे तावत्कुर्याद्यथाक्रमम् ।
[2]दिवोदितानि कृत्वैव विदध्यादुत्तराणि च ।
शर्वर्याः प्रथमे यामे दिवा कर्माणि कारयेत् ।
ब्रह्मयज्ञं च सौरं च [illegible] ।। [illegible]

*२. प्रकाशिका*

भोजनानन्तरकृत्यमाह - *वेदेति* । शास्त्रशब्दस्य [illegible] [3]निर्णेतव्यनिर्णायकत्वादिना भेदमभिसन्धाय पृथगुक्तिः । [illegible] वेदशास्त्रं, ब्रह्मसूत्रादिकं तेनेत्यर्थः । तद्विचारेण [illegible] सन्मार्गाविरोधिना 'गुरोरपि समं हास्यं कर्तव्यं कुटिलं विना' इत्युक्तत्वात् । क्षराक्षरपुरुषाभ्यामुत्तमं नारायणं सन्तोषयन् अहश्शेषम् [illegible] नयेत् । अथ सन्ध्यामुपतिष्ठेत् । पूर्ववत् - प्रातर्वत् ।

ननु वेदे विचारस्य 'ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम्' इति विहितत्वात् किमर्थमिदमुच्यत इति चेत्, उच्यते । ज्ञानसाधनत्वेन

१. व्यतीयाये ग. २. इतः परं कारयेत् इत्यन्तो भागः [illegible] नास्ति ।
३. निर्णय निर्णातव्य ग.

विचारस्यावश्यकतया पुनः पुनस्तत्कर्तव्यतोच्यते । तथा च ब्रह्मसूत्रम् - 'आवृत्तिरसकृदुपदेशात्' (4.1.1) इति ।

अथवा वेदशास्त्रविचारेण षष्ठसप्तमकालौ नयेत् । 'विनोदेन' गृहवार्तादिना अष्टमकालं नयेत् । तथा च दक्षः -

इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ।
अष्टमे [1]लोकयात्रा तु वहिस्सन्ध्या ततः पुनः।। इति

सायं होमस्तु प्रातर्होमावसाने निरूपितः । सायं होमानन्तरं वैश्वदेवं कार्यम् । याज्ञवल्क्यः -

पुनः पाकमुपादाय सायमप्यवनीयते ।
वैश्वदेवनिमित्तं वै पत्न्याः सार्धं वलिं हरेत् ।
तथापि श्वपचादिभ्यस्तथैव च विसर्जनम् ।
अतिथिं चागतं तत्र [2]स्वशक्त्या पूजयेद् वुधः ।
दिवाऽतिथौ तु विमुखे गते यत्पातकं नृप ।
भवेच्चाष्टगुणं पुंसां सूर्योढे विमुखे गते ।
तस्मात् स्वशक्त्या राजेन्द्र [3]सूर्योढमतिथिं नरः ।
पूजयेत्, पूजिते तस्मिन् पूजितास्सर्वदेवताः ।

सूर्योढः सूर्यास्तमयानन्तरमागतः ।

नामभिः कीर्तयित्वाऽथ सायं होमं समाचरेत् ।
अतिथिं तर्पयित्वाऽथ स्वयं भञ्जीत पूर्ववत् ।।

तदिदमुक्तम् - ' अहश्शेषं नयेत् सन्ध्यामुपासीताथ पूर्ववत् ' इति ।। १४ ।।

### ३. *तन्त्रदीपिका*

तदनन्तरमाह - *वेदेति* । एवमहश्शेषं सत्कालक्षेपपूर्वकं समाप्य [illegible]पूर्वकं सन्ध्यावन्दनं कर्तव्यमित्यर्थः । तत औपासनं कर्तव्यमिति सूचयति - *[illegible]दिना* । उक्तं च याज्ञवल्क्येन -

प्रातर्होमः [4]सङ्गवान्तः कालः स्यादुदिते रवौ ।

---

१. कालयात्रा तु क.　　२. स्वशाखां क.
३. सायमपि क.　　४. सम्भवान्तः क.

सायमस्तमिते होमः कालस्तु [1]नवनाडिका ।। इति
मेरुकाञ्चनतुल्यानि वाजपेयशतानि च ।
कन्याकोटिप्रदानं च न समं सायमाहुतेः ।। इति

एवं च 'अथ' 'पूर्ववत्' इति पदाभ्यां सन्ध्यावंन्दनमारभ्योपासन-[2]भगवदाराधनवैश्वदेवभृत्यातिथिसहभोजनानि सूचितानि ।

सङ्ग्रहे -

सायमौपासनं हुत्वा कुर्याद् देवस्य पूजनम् ।
विष्णुनैवेद्यशेषेण वैश्वदेवं समाचरेत् ।
तथैवातिथिसंयुक्तः पुत्रमित्रसमन्वितः ।
रात्रौ च भोजनं कुर्यात् [3]अनिषिद्धदिने द्विजः ।। इति

*सदाचारस्मृतिः*

यामात् परत एवाथ स्वपेद् ध्यायन् जनार्दनम् ।
अन्तराले ततो बुध्वा स्मरेत बहुशो हरिम् ।।१५।।

*१. आह्निककौस्तुभः*

स्वापे न विधिः । तस्य रागतः प्राप्तत्वात् । किन्तु अथ सायंकृत्यानन्तरं यदा स्वपेत्तदा यामात्परत एव जनार्दनं तैजसप्राज्ञादिरूपं देहस्थं जननादिवर्जितं हरिं स्मरन्नेव स्वपेदित्यतो न पूर्वमिति नियम इत्यर्थः ।

*(काम्यकर्मिणां ताम्बूलस्वीकारक्रमनिरूपणम्)*

[4]अत्राहः सायं वा भोजनोत्तरं [5]घटिकातिक्रमे ताम्बूलविधानं काम्यकर्मिणां द्रष्टव्यम् । तदाह चरकशास्त्रे -

भुक्त्वान्नं सलिलं पीत्वा गृहीत्वा बहुभेषजम् ।
प्रतीक्ष्य घटिकामेकां ताम्बूलं भक्षयेत्ततः ।
भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलचर्वणम् ।
श्रवणं चेतिहासस्य ततः [6]कुर्यात् समाहितः ।। इति

---

१. नयनाटका ख. २. भगवदाधान ख. ३. नानिषिद्ध क.
४. अत्राह सायं क. ग. ५. घटातिक्रमे क. ६. कुर्यात्समाधितः क. ग.

एकपूगं त्रिपूगं वाऽदनं स्वादनमुत्तमम् ।
एकद्वित्रिचतुःपञ्चषड्भिः पूगीफलैः क्रमात् ।
लाभालाभौ सुखं दुःखमाधिर्मरणमेव च ।
ततः पूगेन पत्राणि प्रातस्त्रीण्येव खादयेत् ।
मध्यन्दिने तु चत्वारि सायं षड्भिः समाचरेत् ।
अग्रतः श्रीर्यशो मूले मध्ये विष्णुः प्रतिष्ठितः ।
तस्मादग्रं च मूलं च मध्यं च परिवर्जयेत् ।
[1]अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
दशजन्मदरिद्रश्च मरणे न हरिं स्मरेत् ।
स्त्रीहस्तेन न खातव्यं वामहस्तेन वा पुनः ।
पाण्डुत्वं दन्तदौर्वल्यम् अक्षिरोगं वलक्षयम् ।
करोति [2]मुखरोगांश्च ताम्बूलमतिसेवनात् ।
विद्याकामोऽहनि रात्रौ ताम्बूलं तु न भक्षयेत् ।
यतिश्च ब्रह्मचारी च विधवा च रजस्वला ।
प्रत्येकं मांसतस्तुल्यं मेलने सुरया समम् ।
मातापित्रोः क्षये श्राद्धे तथैव मृतसूतके ।
ताम्बूलं चर्वयेद् यस्तु पितृहा स निगद्यते ।

इति वशिष्ठः । इति ताम्बूलविधिः ।

*(स्वापे दिङ्नियमः ध्येयदेवताश्च)*

अथ मन्त्रस्वापविधिः -

सुप्रक्षालितपादः सर्वतो रक्षां कृत्वा शय्यामधिष्ठाय रात्रिसूक्तं जप्त्वा विष्णुं गुर्वादींश्च स्मृत्वा, 'सर्पाय सर्प भद्रं ते' इति श्लोकद्वयं [3]जप्त्वा, अगस्त्यादि पञ्च ऋषीन् स्मृत्वा, मङ्गलश्रुतिशङ्खं शृण्वन्, दक्षिणशिराः पूर्वशिराः वा स्वपेत् ।

तथा चाह विस्तरतः स्मृतिसारसङ्ग्रहे -

प्राक् शिराः शयने विद्यां धर्ममायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ता हानिर्मृत्युरथोत्तरे ।

१. यानिधाय क. २. मुखरोगांश्च ग. ३. XXX ख.

स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणे शिरः ।
प्रत्यक्शिरा, प्रवासे तु न कदाचिदुदक्शिराः ।
शून्यागारे श्मशाने च एकवृक्षे [1]चतुष्पथे ।
महादेवगृहे चापि मातृवेश्मनि न स्वपेत् ।
न चापि भग्नशयने गुरूणां च तथोपरि ।
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ।
कार्पासं पुस्तकं चैव लोहपर्णे तथैव च ।
पाषाणं काष्ठमित्यादि शिरोऽधः परिवर्जयेत् ।
अगस्त्यं माधवं चैव मुचुकुन्दं महामुनिम् ।
कपिलं मुनिमास्तीकं पञ्चैतान् शयने स्मरेत् ।
सुगन्धं वनिता वस्त्रं गीतं ताम्बूलभक्षणम् ।
शय्या च भूषणं दानमष्टभोगाः प्रकीर्तिताः ।

अथ शयनोत्तरं धर्ममाह - *अन्तराल* इति । ततः - स्वापानन्तरम् । अन्तराले - स्वापमध्यकाले । वुध्वा - प्रयत्नेन वोधं सम्पाद्य, वहुशः - अनेकवारं - सकलदुरितहरं चिन्तयेत् इत्यर्थः ।

( *वामदेवयन्त्रस्वरूपादिनिरूपणम्* )

यद्वा ग्राम्यधर्ममाचरितुकामो 'गर्भं देहि शिनीवालि' इत्युक्तरीत्या गर्भधारक [2]धातृनामकहरिं स्वान्तस्थवायुस्थतया ध्यायन्, गर्भाधानार्थं स्वभार्यया सह स्वपेदित्यभिप्रेत्य तत्र स्त्रीभोगं कुर्वन्नपि मध्ये हरिं स्मरेदित्याह - *अन्तराल* इति । '[3]सोपस्कराणि वाक्यानि भवन्ति' इति न्यायादध्याहृत्य योज्यते । 'ततः' शय्योपगमानन्तरम् 'अन्तराले' स्वान्तः भार्यायां च हरिम् । उपलक्षणमिदम् । श्रीहरिवायुभारतीदेवीनां मुख्यं भोगं स्मरेत् । वहुशः वहून् हरिवाय्वादीन् स्वान्तस्थतया स्वभार्याभोक्तॄन् स्मरेत् । तथा अन्तराले स्वापान्तराले वुध्वा विष्ण्वादीन् भोक्तॄन् ज्ञात्वा व्यवायं कुर्यात् ।

नन्वत्र व्यवायो न श्रूयत इति चेत् सत्यम्, तस्यानुमानेनाधिगमं ब्रूमः । '[4]आग्नेयोऽष्टाकपालो भवति' इत्यत्र [5]तद्धिताभिहितद्रव्यदेवतासम्वन्धेन

---

१. चतुष्पदे कं. २. भ्रातृनामकहरिं ग. ३. सोपकाराणि क. ग.
४. अग्नयो क. ५. तद्धिताय हितद्रव्येण ग.

यागोऽनुमीयते । न हि स्वत्वत्यागरूपमङ्गमन्तरेणाष्टादशकपालस्याग्नेयत्वं सम्भवति। तथा विष्णुस्मरणविधानं किञ्चित्कर्म विहाय न [1]सम्भवतीत्यनुषङ्गिणः कर्मविशेषस्यानुमानं भवति ।

ननु स्मरणमेवात्र विधीयते न तु कर्मेति चेत्, न। 'स्मर्तव्यः सततं विष्णुः' इति तस्याग्रे पृथग्विधानादस्य वैयर्थ्यापत्तेः । न च व्यवायाख्यकर्म - विशेषानुमानं कथमिति वाच्यम् । लोकवेदप्रसिद्ध्या प्राप्तस्य व्यवायस्य [2]विष्णुस्मरणसहकृततया फलवत्त्वमत्रोच्यत इति । यथोक्तं भागवततात्पर्ये - 'वामदेवो नाम यज्ञो व्यवायो हरिपूजनम्' इत्यादि ।

मन्त्रवर्णोऽपि व्यवायस्य कर्तव्यतामवगमयति "तां पूषन् [3]शिवतमामीरयस्व यस्यां बीजं मनुष्या वपन्ति । या न उरू विशती [4]विश्रयाते यस्यामुशन्तः प्रहराम शेफम्" इति । 'जायेव पत्य उशती सुवासा' इति च । अयमर्थः-

हे पूषन् तां स्त्रियम् अस्मान् प्रति सम्यक् ईरयस्व । अस्मदादयो मनुष्याः यस्यां बीजं रेतः वपन्ति । या च अस्मान् प्रति स्वकीयौ उरू प्रसारयति । कामयमानाः वयं यस्यां शेफं शिश्नं प्रहराम इति । सुवासाः शोभनवस्त्रयुक्ता पत्नी उशती - उरुकाले पतिसम्बन्धं कामयमाना स्वकीयां [5]तनुं पतिं प्रति प्रकटीकरोति । तथा वेदवागपि अर्थज्ञं प्रति स्वाशयं प्रकटीकरोतीति पूर्वेण सम्बन्धः ।

अथ गर्भाधानार्थं स्त्रीगमनविधिः । श्रीर्हवा एषां स्त्रीणां [6]यन्मलोद्वासा -स्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपसङ्क्रमेत इत्यादि बृहदारण्यकवाक्ये दृष्टव्यः । आश्वलायनादिस्मृतयश्च -

पत्नीमृतुमतीं स्निग्धां तृप्तां भोगविवर्जिताम् ।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः ।
[7]अनर्तुमतीमप्रौढामसतीं च बहुप्रजाम् ।

---

१. सम्भवनुपङ्गात् २. विष्णुस्मरणकृतया ग. ३. शिवता मारयस्व ख.
४. विश्रया ग. ५. तनुं [illegible] क. ६. यन्मलोद्वासा ग.
७. अनृतामतिप्रौढम् क.

स्त्रीप्रजाव्हुलां वन्ध्यां द्वेषिणीं च रजस्वलाम् ।
कृशां विवर्णां नोपेयात् हुतप्रत्यागतामपि ।
प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाङ्गना ।
द्वितीये ब्रह्मघाती च तृतीये रजकी तथा ।
चतुर्थे शूद्रजा प्रोक्ता ह्येवं नारी सदा ऋतौ ।
चतुर्थे नावगम्याह्नि विद्याहीनं प्रसूयते ।
भार्यासम्भोगसमये पुष्पकालं विनान्यदा ।
ब्रह्मसूत्रं द्विजः कुर्यात् निवीतं पृष्ठभागतः ।। इति ।

अत्र स्वभार्यायामेकापत्यपर्यन्तं ऋतुगमनं नित्यं तथा विहितम् । तदुत्तरं काम्यमित्यवगन्तव्यम् ।

ननु 'इमां त्वमिन्द्र [1]मीढ्वस्सुपुत्रां सुभगां वृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि' 'सोमोऽददद् गन्धर्वाय गन्धर्वोऽददग्नये । रयिं पुत्रांश्चादादग्निः मह्यमथो इमाम् ।।' 'पुत्रकामाः ख्यापयेरन् लभन्ते ह पुत्रान् लभन्ते ह पुत्रान्' इत्यादिमन्त्रयोर्ब्राह्मणे च वहुपुत्रविधिरस्ति । तथा हि - 'हे मीढ्व भक्तेष्टवर्षक इन्द्र इमां वधूं सुपुत्रादिगुणवतीं कुरु । अस्यां दशपुत्रानाधेहि कारयेत्यर्थः ।' कन्यारूपेण स्थितां स्त्रियं [2]सोमो देवो गन्धर्वायादत् भवेति । गन्धर्वस्तु अग्नयेऽदात् । अग्निस्तु इमां कन्यां मह्यमदात् । तथा धनानि पुत्रानप्यदादित्यर्थः ।

तथा च स्मृतिः -

शौचं वाचं च मेध्यत्वं [3]सोमगन्धर्वपावकाः ।
ददुस्तासां वरानेतास्तस्मात् मेध्यतराः स्मृताः ।
यथेष्टकामनास्सर्वास्तासामिन्द्रो वरं ददौ ।
तस्मात् तदिच्छया कामी पुमान् स्यात्तु तथा स्त्रियः ।
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ।
लज्जा चतुर्गुणा तासामाहारश्च तदर्धकः ।। इति
यो ऋतुस्नातभार्यायास्सन्निधिं नोपगच्छति ।

---

१. मध्वः सुपत्राम् क. ख. २. सोमादयो ग.

३. [illegible] क.

घोरायां भ्रूणहत्यायां पितृभिस्सह [1]गच्छति ।
ऋतुकालोपगामी च प्राप्नोति परमां गतिम् ।
तत्कालप्रभवः पुत्रः पितॄणां स्वर्गदो भवेत् ।

इत्यादिस्मृतेश्च ऋतुकाले नित्यत्वं सर्वदा काम्यत्वं कथमिति चेत्, उच्यते । न ह्येतेषु वहुपुत्राणां विधिरस्ति। अपि तु वह्वपत्यप्रशंसामात्रम् ।

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ।
[2]पितॄणामनृणश्चैव कामजान् इतरान् विदुः ।।

इति मनुवचनात् ।

यद्वा एकेन कुलोद्धारः पितृऋणापकरणं च भवतीति निश्चेतुमशक्यत्वात्, अनेकेषां मध्ये यः कोऽपि समीचीनो भवतीति [3]सम्भावनामात्रेण वहुपुत्रोत्पादनमुच्यते ।

'एष्टव्या वहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वा वरयेत् कन्यां नीलं वा वृषमुत्सृजेत् ।।'

इति इतिहासवचनात् ।

मन्त्रावर्णश्च -

"सोमो देवो कर्मण्यं ददाति सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं सादन्यं विदथ्यं पितृश्रवणं यो ददाशदस्मै ।" इति ।

सोमो देवता कर्मनिष्ठं गृहादिषु [4]कुशलं वहुज्ञं सभासु साधुमेवम्भूतं वीरं पुत्रं ददाति । यः पुत्रः अस्मै पित्रे पितॄणां श्रवणं सन्त्यविच्छेदेन परम्पराश्रवणं ददाशत् दत्तवान् इति मन्त्रार्थः ।

अत्र कर्मनिष्ठाद्यनेकगुणविशिष्टस्यैकस्यैव पितृसन्ततिहेतुत्वमवगम्यते।

यस्मिन् ऋणं सन्नयति येन सान्तत्यमश्नुते ।
स एव धर्मजः पुत्रः कामजान् इतरान् विदुः ।

इति वचनान्तराच्चेतरेषां काम्यत्वमेकापत्यपर्यन्तमृतुगमनं निश्चाययति।

---

१. मज्जति ग.    २. पितॄणामनृणश्चाथ ख.



३. सम्मानमात्रेण क.    ४. कुलसभासु ग.

स्त्रीप्रजावहुलां वन्ध्यां द्वेषिणीं च रजस्वलाम् ।
कृशां विवर्णां नोपेयात् हुतप्रत्यागतामपि ।
प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाङ्गना ।
द्वितीये ब्रह्मघाती च तृतीये रजकी तथा ।
चतुर्थे शूद्रजा प्रोक्ता ह्येवं नारी सदा ऋतौ ।
चतुर्थे नावगम्याह्नि विद्याहीनं प्रसूयते ।
भार्यासम्भोगसमये पुष्पकालं विनान्यदा ।
ब्रह्मसूत्रं द्विजः कुर्यात् निवीतं पृष्ठभागतः ।। इति ।

अत्र स्वभार्यायामेकापत्यर्यन्तं ऋतुगमनं नित्यं तथा विहितम् । तदुत्तरं काम्यमित्यवगन्तव्यम् ।

ननु 'इमां त्वमिन्द्र [1]मीढ्वस्सुपुत्रां सुभगां वृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि' 'सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं पुत्रांश्चादादग्निः मह्यमथो इमाम् ।।' 'पुत्रकामाः ख्यापयेरन् लभन्ते ह पुत्रान् लभन्ते ह पुत्रान्' इत्यादिमन्त्रयोर्ब्राह्मणे च वहुपुत्रविधिरस्ति । तथा हि - 'हे मीढ्व भक्तेष्टवर्षक इन्द्र इमां वधूं सुपुत्रादिगुणवतीं कुरु । अस्यां दशपुत्रानाधेहि कारयेत्यर्थः ।' कन्यारूपेण स्थितां स्त्रियं [2]सोमो देवो गन्धर्वायादत् भवेति । गन्धर्वस्तु अग्नयेऽदात् । अग्निस्तु इमां कन्यां मह्यमदात् । तथा धनानि पुत्रानप्यदादित्यर्थः ।

तथा च स्मृतिः -

शौचं वाचं च मेध्यत्वं [3]सोमगन्धर्वपावकाः ।
ददुस्तासां वरानेतास्तस्मात् मेध्यतराः स्मृताः ।
यथेष्टकामनास्सर्वास्तासामिन्द्रो वरं ददौ ।
तस्मात् तदिच्छया कामी पुमान् स्यात्तु तथा स्त्रियः ।
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ।
लज्जा चतुर्गुणा तासामाहारश्च तदर्धकः ।। इति
यो ऋतुस्नातभार्यायास्सन्निधिं नोपगच्छति ।

---

१. मध्वः सुपत्राम् क. ख.  २. सोमादयो ग.
३. सोमगन्धर्वपावकाः क.

घोरायां भ्रूणहत्यायां पितृभिस्सह [1]गच्छति ।
ऋतुकालोपगामी च प्राप्नोति परमां गतिम् ।
तत्कालप्रभवः पुत्रः पितृणां स्वर्गदो भवेत् ।

इत्यादिस्मृतेश्च ऋतुकाले नित्यत्वं सर्वदा काम्यत्वं कथमिति चेत्, उच्यते । न ह्येतेषु वहुपुत्राणां विधिरस्ति। अपि तु वह्वपत्यप्रशंसामात्रम् ।

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ।
[2]पितृणामनृणश्चैव कामजान् इतरान् विदुः ।।

इति मनुवचनात् ।

यद्वा एकेन कुलोद्धारः पितृऋणापकरणं च भवतीति निश्चेतुमशक्यत्वात्, अनेकेषां मध्ये यः कोऽपि समीचीनो भवतीति [3]सम्भावनामात्रेण वहुपुत्रोत्पादनमुच्यते ।

'एष्टव्या वहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वा वरयेत् कन्यां नीलं वा वृषमुत्सृजेत् ।।'

इति इतिहासवचनात् ।

मन्त्रवर्णश्च -

"सोमो देवो कर्मण्यं ददाति सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं सादन्यं विदध्यं पितृश्रवणं यो ददाशदस्मै ।" इति ।

सोमो देवता कर्मनिष्ठं गृहादिषु [4]कुशलं वहुज्ञं सभासु साधुमेवम्भूतं वीरं पुत्रं ददाति । यः पुत्रः अस्मै पित्रे पितृणां श्रवणं सन्त्यविच्छेदेन परम्पराश्रवणं ददाशत् दत्तवान् इति मन्त्रार्थः ।

अत्र कर्मनिष्ठाद्यनेकगुणविशिष्टस्यैकस्यैव पितृसन्ततिहेतुत्वमवगम्यते।

यस्मिन् ऋणं सन्नयति येन सान्तत्यमश्नुते ।
स एव धर्मजः पुत्रः कामजान् इतरान् विदुः ।

इति वचनान्तराच्चेतरेषां काम्यत्वमेकापत्यपर्यन्तमृतुगमनं निश्चाययति।

---

१. मज्जति ग. २. पितृमाननृणश्चाथ ख.
३. सम्मानमात्रेण क. ४. कुलसभासु ग.

स्त्रीप्रजाबहुलां वन्ध्यां द्वेषिणीं च रजस्वलाम् ।
कृशां विवर्णां नोपेयात् हुतप्रत्यागतामपि ।
प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाङ्गना ।
द्वितीये ब्रह्मघाती च तृतीये रजकी तथा ।
चतुर्थे शूद्रजा प्रोक्ता ह्येवं नारी सदा ऋतौ ।
चतुर्थे नावगम्याह्नि विद्याहीनं प्रसूयते ।
भार्यासम्भोगसमये पुष्पकालं विनान्यदा ।
ब्रह्मसूत्रं द्विजः कुर्यात् निवीतं पृष्ठभागतः ।। इति ।

अत्र स्वभार्यायामेकापत्यपर्यन्तं ऋतुगमनं नित्यं तथा विहितम् । तदुत्तरं काम्यमित्यवगन्तव्यम् ।

ननु 'इमां त्वमिन्द्र [1]मीढ्वस्सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि' 'सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं पुत्रांश्चादादग्निः मह्यमथो इमाम् ।।' 'पुत्रकामाः ख्यापयेरन् लभन्ते ह पुत्रान् लभन्ते ह पुत्रान्' इत्यादिमन्त्रयोर्ब्राह्मणे च बहुपुत्रविधिरस्ति । तथा हि - 'हे मीढ्व भक्तेष्टवर्षक इन्द्र इमां वधूं सुपुत्रादिगुणवतीं कुरु । अस्यां दशपुत्रानाधेहि कारयेत्यर्थः ।' कन्यारूपेण स्थितां स्त्रियं [2]सोमो देवो गन्धर्वायादत्त् भवेति । गन्धर्वस्तु अग्नयेऽदात् । अग्निस्तु इमां कन्यां मह्यमदात् । तथा धनानि पुत्रानप्यदादित्यर्थः ।

तथा च स्मृतिः -

शौचं वाचं च मेध्यत्वं [3]सोमगन्धर्वपावकाः ।
ददुस्तासां वरानेतास्तस्मात् मेध्यतराः स्मृताः ।
यथेष्टकामनास्सर्वास्तासामिन्द्रो वरं ददौ ।
तस्मात् तदिच्छया कामी पुमान् स्यात्तु तथा स्त्रियः ।
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ।
लज्जा चतुर्गुणा तासामाहारश्च तदर्धकः ।। इति
यो ऋतुस्नातभार्यायास्सन्निधिं नोपगच्छति ।

१. मध्वः सपत्राम् क. ख. २. सोमादयो ग.
३. सोमगन्धर्वपावनाः क.

घोरायां भ्रूणहत्यायां पितृभिस्सह [1]गच्छति ।
ऋतुकालोपगामी च प्राप्नोति परमां गतिम् ।
तत्कालप्रभवः पुत्रः पितृणां स्वर्गदो भवेत् ।

इत्यादिस्मृतेश्च ऋतुकाले नित्यत्वं सर्वदा काम्यत्वं कथमिति चेत्, उच्यते । न ह्येतेषु वहुपुत्राणां विधिरस्ति। अपि तु वह्वपत्यप्रशंसामात्रम् ।

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ।
[2]पितृणामनृणश्चैव कामजान् इतरान् विदुः ।।

इति मनुवचनात् ।

यद्वा एकेन कुलोद्धारः पितृऋणापकरणं च भवतीति निश्चेतुमशक्यत्वात्, अनेकेषां मध्ये यः कोऽपि समीचीनो भवतीति [3]सम्भावनामात्रेण वहुपुत्रोत्पादनमुच्यते ।

'एष्टव्या वहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वा वरयेत् कन्यां नीलं वा वृषमुत्सृजेत् ।।'

इति इतिहासवचनात् ।

मन्त्रवर्णश्च -

"सोमो देवो कर्मण्यं ददाति सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं सादन्यं विदथ्यं पितृश्रवणं यो ददाशदस्मै ।" इति ।

सोमो देवता कर्मनिष्ठं गृहादिषु [4]कुशलं वहुज्ञं सभासु साधुमेवम्भूतं वीरं पुत्रं ददाति । यः पुत्रः अस्मै पित्रे पितृणां श्रवणं सन्त्यविच्छेदेन परम्पराश्रवणं ददाशत् दत्तवान् इति मन्त्रार्थः ।

अत्र कर्मनिष्ठाद्यनेकगुणविशिष्टस्यैकस्यैव पितृसन्ततिहेतुत्वमवगम्यते।

यस्मिन् ऋणं सन्नयति येन सान्तत्यमश्नुते ।
स एव धर्मजः पुत्रः कामजान् इतरान् विदुः ।

इति वचनान्तराच्चेतरेषां काम्यत्वमेकापत्यपर्यन्तमृतुगमनं निश्चाययति।

---

१. मज्जति ग. २. पितृमाननृणश्चाथ ख.

३. सम्मानमात्रेण क. ४. कुलसभासु ग.

ऋतुस्नातां तु यो भार्याम् इति वचस्तु एकापत्योत्पत्तेः पूर्वम् ऋतुकालत्यागे [1]दोषापादनपरम् इति निष्कर्षः ।

( स्त्रीधर्मनिरूपणम् )

अथ प्रसङ्गात् स्त्रीधर्माः ।

शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ।
नास्ति स्त्रीणां पृथग् ज्ञानं न व्रतं नाप्युपोषणम् ।
पतिशुश्रूषणं तासां तेन [2]स्वर्गो विधीयते ।
अभ्यञ्जनमलङ्कारगन्धपुष्पादिधारणम् ।
इष्टान्नभोजनं चैव [3]त्यजेत्प्रोपितभर्तृका ।
साध्वीनामेष नारीणामग्निप्रपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कुत्रचित् ।
गर्भिणी वा विदेशस्था सूतिका वा भवेद्यदि ।
न चानुगमनं भर्तुर्ब्रह्मचर्यव्रते स्थिता ।
शिरसो मुण्डनं कृत्वा सर्वभोगविवर्जिता ।
एकभोक्त्री ह्यधश्शय्या स्नानं त्रिषवणं चरेत् ।
पर्यङ्कशयनान्नारी विधवा पातयेत् पतिम् ।
नैवाङ्गोन्मर्दनं कार्यं स्त्रिया विधवया क्वचित् ।
प्रत्यहं तर्पणं कार्यं भर्तुः [4]कुशतिलोदकैः ।
तत्पितुस्तत्पितुश्चाऽपि नामग्रहणपूर्वकम् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं पुनः ।
एवंविधैश्च नियमैः कृच्छ्रैर्वा विजितेन्द्रिया ।
[5]नाधिरोहेदनड्वाहं प्राणैः कण्टगतैरपि ।
कञ्चुकं न परीदध्यात् वासो न विकृतं वसेत् ।
अपृष्ट्वा च सुतान् किञ्चित् न कुर्याद् भर्तृतत्परा ।
विवाहात् प्राक् पिता रक्षेत् पती रक्षेत्तु यौवने ।
रक्षेयुर्वार्धके पुत्रास्त्रीणां नास्ति स्वतन्त्रता ।

---

१. दोषवादन क.

२. सर्वो ग.

३. त्यज प्रापितभर्तृका ग. ४. कुशतलादिभिः क. ५. नारोहदधावनं क.

इति क्षीरनिधिनिबन्धे । अत्र विधवायास्तर्पणं तु पुत्रपौत्राद्यभावे ज्ञेयम् । [1]भर्तृनियामको नारायणो मे प्रीयताम् इति तासां सर्वव्रताद्यारम्भे सङ्कल्पः । तासां पतिद्वारेणैव हरिप्रीतिरिति ज्ञेयम् ।। १५ ।।

२. *प्रकाशिका*

एवं रात्रेः प्रथमप्रहरमतिवाह्य शयनं कार्यमित्याह । *यामात् परत* इति । तत्र याज्ञवल्क्यः -

कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही ।
गच्छेच्छय्यामस्फुटितां ततो दारुमयीं नृप ।। इति ।

शयनप्रकारमाह हारीतः - सुप्रक्षालितचरणतलो रक्षां कृत्वा तूदकपूर्ण - घटादिमङ्गलोपेतः [2]आत्माभिरुचितां अनुपहतां सूत्रामणीमप्यतिपटन् सूत्रामणीं पृथिवीं शय्यामधिष्ठात्रीं रात्रिसूक्तं जपित्वा विष्णुं नमस्कृत्य -

'सर्पापसर्प भद्रं ते दूरं गच्छ [3]महायशाः ।
जन्मेजयस्य सत्रान्ते आस्तीकवचनं श्रृणु ।।'

इति श्लोकं पठन् इष्टदेवस्मरणं कृत्वा समाधिमास्थाय अन्यांश्च वैदिकान् मन्त्रान् सावित्रीं च जपित्वा माङ्गल्यं शुभं शङ्खं च श्रुण्वन् दक्षिणशिरः स्वपेत् इति ।

तथा च श्रीविष्णुपुराणे -

प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ।। इति ।

गार्ग्योऽपि -

स्वगृहे प्राक् शिराः शेते श्वाशुर्ये दक्षिणे शिराः ।
प्रत्यक् शिराः प्रवासे तु न कदाचिदुदक्शिराः ।

पुराणेऽपि -

रात्रिसूक्तं जपेत् स्मृत्वा सर्वांश्च सुखशायिनः ।
नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थः स्वपेन्निशि ।

---

१. भर्तृको ग. २. XXXXXX रुचितां कं.
३. महीशयः क.

अगस्त्यो माधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ।

*(स्वापे निषिद्धप्रदेशाः)*

मार्कण्डेयः शयने निषिद्धान्याह -

शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
[1]महादेवगृहे वाऽपि मातृवेश्मनि न स्वपेत् ।
न यक्षनागायतनस्कन्धस्यायतने तथा ।
[2]कूलच्छायासु च तथा शर्करालोष्टपांसुषु ।
न स्वपेच्च तथा दर्भे विना दीक्षां कथञ्चन ।
धान्यगोविप्रदेवानां गुरूणां च तथोपरि ।
न चाऽपि भग्नशयने नाशुचौ नाशुचिः स्वपेत् ।
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ।
आकाशे सर्वशून्ये च [3]न च चैत्यद्रुमे तथा ।

प्रचेताः -

न विशालां न वै भग्नां न समां मलिनां न च ।
न च जन्तुमयीं शय्यां अधितिष्ठेदनावृताम् ॥

दक्षः -

प्रदोषपश्चिमौ यामौ विद्याभ्यासरतो नरः ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

विष्णुः -

निद्रासमयमासाद्य ताम्बूलं वदनात् त्यजेत् ।

ताम्बूललक्षणमाह वशिष्ठः -

सुपूग[4]फलकर्पूरनागपर्णसमायुतम् ।
लवङ्गचूर्णसंयुक्तं ताम्बूलं सुमनोहरम् ।

कूर्मपुराणे -

इत्येतदखिलं प्रोक्तं रात्रावहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ।

---

१. महीदेवगृहे क. २. तूलविच्छायासु क. ३. न च चित्रद्रुमेऽथवा ख.
४. फलकस्तूरि क.

नास्तिक्यादथवाऽलस्यात् ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् [1]काकयोनौ प्रजायते ।
नान्यो विमुक्तये पन्था विमुच्यत्वाश्रमविधिं स्वकम् ।
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ।। इति

अथ शयने प्रत्यासन्नं स्त्रीसम्बन्धमाह - *अन्तराल* इति । ततः शय्योपगमानन्तरं स्वापान्तराले वुध्वा वहुशः विष्णुस्मरणपूर्वकं कुर्यात् ।

नन्वत्र व्यवायो न श्रूयत इति चेत् सत्यम्, तथापि तस्यानुमानेनाधिगमं ब्रूमः । तथा हि - [2]सर्वकर्मानुषज्यमानविष्णुस्मरणविधानं किञ्चित्कर्मविधानमन्तरेण न सम्भवतीति अनुषङ्गिणः कर्मविशेषस्य अनुमापकं भवति ।

न च स्मरणमेवात्र वाक्ये विधीयते न तु स्मरणव्यतिरिक्तं कर्मेति वाच्यम् । स्मर्तव्यः सततं विष्णुः इत्यनेन सर्वदा विष्णुस्मरणस्य [3]पृथक् विधानादस्य वैयर्थ्यापत्तेः । न च व्यावायाख्यकर्मविशेषस्यानुमानं कथमिति वाच्यम् । प्रसिद्ध्या प्राप्तस्य व्यवायस्य विष्णुस्मरणव्यतिरिक्तस्याफलत्वमत्र उच्यते । तथा चायमर्थः - यत् स्वापसमये क्रियते तत्र वहुशो हरिं स्मरेत् इति। मन्त्रवर्णाच्च व्यवायस्य कर्तव्यत्वमवगम्यते ।*

*(वामदेव्ययज्ञस्वरूपम्).*

ऋतुस्नातां तु भार्यां तु यदि नैवोपगच्छति ।
घोरायां भ्रूणहत्यायां पितृभिः सह गच्छति ।
ऋतुस्नाता च या नारी पतिं नैवोपगच्छति ।
शुनी वृकी सृगाली स्यात् सूकरी च पुनः पुनः ।
ऋतुकालोपगामी तु प्राप्नोति परमां गतिम् ।
तत्कालप्रभवः पुत्रो पितृणां स्वर्गदो भवेत् ।
कुङ्कुमं चाञ्जनं चैव तथा हारिद्रसिन्धुरम् ।

---

१. कुङ्योनौ ख. २. सर्वकर्मार्घसङ्गविधानं क.

३. पृथक् स्मरणात् ख.



* मन्त्रोदाहरणं तद्व्याख्यानं च श्रीनिवासतीर्थीयेगतमत्र पुनरुक्तिभिया न प्रदत्तम् ।

धौतवस्त्रं च ताम्बूलं संयोगे च शुभावहम् ।
नमस्कृत्वा पदे भर्तुः पश्चाज्जाया समाविशेत् ।
नारी सुखमवाप्नोति न भवेद्दुःखभागिनी ।
ताम्बूलेन मुखं पूर्णं कुङ्कुमादिसमन्वितम् ।
पतिं प्रह्लादसंयुक्तं कृत्वा योगं समाचरेत् ।
विना ताम्बूलवदनां नग्नां कलहकारिणीम् ।
दुर्मुखीं च क्षुधायुक्तां संयोगे च परित्यजेत् ।
[1]वर्जयेद् गुर्विणीं चैव षण्मासादुपरि वर्जयेत् ।
ताम्बूलं चर्वयेन्मर्त्यः पवित्रं श्रीकरं परम् ।
सर्वदेशेष्वधर्मोऽयं पथि ताम्बूलभक्षणम् ।
संस्मृत्य परमात्मानं [2]पत्नीजङ्घं प्रसारयेत् ।
योनिं स्पृष्ट्वा जपेत्सम्यक् विष्णुर्योनिं प्रजापते ।
मादृशो हि भवेत्पुत्र इति मत्वा स्मरेद्धरिम् ।
अष्टाविंशज्जपेन्मन्त्रं अन्योन्यमवलोकयेत् ।
स्तनौ धृत्वा तु पाणिभ्यामन्योन्यं चुम्बयेन्मुखम् ।
[3]बलं देहीति मन्त्रेण योन्यां शिश्नं प्रवेशयेत् ।
योनेस्तु किञ्चिदधिको भवेल्लिङ्गो बलान्वितः ।
सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ।
सम्भोगे चैव भार्यायाः सुदृढः स्थिरवीर्यवान् ।
स्कन्धौ वाऽथ कटिं धृत्वा यथेष्टं मैथुनं चरेत् ।
कामयज्ञमिति प्राहुः गृहिणामेव सर्वदा ।
अनेन लभते पुत्रं संसारार्णवतारकम् ।
ऋतौ तु गर्भं शङ्कित्वा स्नानं [4]मैथुनिनः स्मृतम् ।
अऋतौ तु यदा गच्छेत् शौचं मूत्रपुरीषवत् ।
ऋतौ नाभिगमेद्य यस्तु स्वस्त्रियं मनुजेश्वर ।
स यातिः नरकं घोरं ब्रह्महत्यां च विन्दति ।
अष्टम्यां चैव सङ्क्रान्तौ व्यतीपाते च पर्वणि ।

---

१. अर्जयेत् क. २. पतिर्जङ्घं ख.
३. बालं क. ४. माध्वनिनः ख.

वैधृतौ च चतुर्दश्यां प्रदोषे च तथा निशि ।
सन्ध्ययोर्जन्मनक्षत्रे व्रतेषु च [1]पितुर्दिने ।
एतेषु दिवसेष्वेव न गच्छेत् स्वस्त्रियं ऋतौ ।
यदि गच्छेत् स पापी स्यात् मोहाद्वा रौरवं व्रजेत् ।
द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ।

*(रजस्वलानियमाः)*

अथ रजस्वलाव्रतान्याह वशिष्ठः -

"त्रिरात्रं रजस्वला अशुचिर्भवति । नाप्सु स्नायात् । अधः शयीत । न दिवा स्वपेत् । [2]न रज्जुं सृजेत् । न मांसमश्नीयात् । न गृहान्निरीक्षेत । न हसेत् न किञ्चिदाचरेत् । अखर्वेण पात्रेण पिबेत् अञ्जलिना वा । पात्रेण लोहितायसेन वा" इति । अखर्वपात्रं मृन्मयपात्रम् ।

*(रजस्वलायाः शुद्धिस्नानानन्तरम् अष्टादशदिनपर्यन्तं रजोदर्शनेऽपि नाशुद्धा । विंशतप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्)*

स्नानानन्तरं पुनरपि रजोदर्शने विशेषमाह हारीतः -

रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वाक् अशुचित्वं न विद्यते ।
एकोनविंशतेरर्वाक् एकाहः स्यात्ततो द्व्यहम् ।
[3]विंशतप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ।
शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाने च स्त्री रजस्वला ।
[4]दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ।। इति

स्नानकाले स्त्रिया पुरुषेण च एवं विष्णुस्मरणं कर्तव्यम् । स्त्रियः ऋतुसङ्कृतं करोतीति यत् तत् प्रद्युम्नाद् भवति । आभिमुख्येन स्त्रिया शेत इति यत् तदनिरुद्धाद् भवति । [5]मिथुनसमवायं गच्छतीति यत् मिथुनपारं न गच्छतीति यत् तच्च सङ्कर्षणाद् भवतीति छान्दोग्ये द्वितीयेऽध्याये [6]त्रयोदशमे खण्डे उक्तम् । १५ ।

---



४. दिवा क. ५. मिथनसमयं ख. ६. दशमे ख.

*३. तन्त्रदीपिका*

भोजनान्तरं निद्राकालमाह - *यामात्परत* इति । तदानीमपि भगवद्विस्मरणं न युक्तमित्याह - *अन्तराल* इति । १५ ।

*सदाचारस्मृतिः*

कायेन वाचा मनसेन्द्रियैर्वा
 बुद्ध्यात्मना वाऽनुसृतस्स्वभावम् ।
करोति यद्यत् सकलं परस्मै
 नारायणायेति समर्पयेत्तत् ।। १६ ।।

*१. आह्निककौस्तुभः*

'यस्मिन् सर्वाणि कर्माणि' इत्यत्र स्वकृतानि आह्निकानि कर्माणि हरावर्पणीयानीत्युक्तम् । तत्र भागवतश्लोकं प्रमाणयति - *कायेनेति* । कायेन कृतं कर्म नमनादि, वाचा स्तोत्रादि, मनसा ध्यानादि, इन्द्रियैर्नवभिः श्रवणादिकं, वाचः पृथगुक्तेः । [1]बुद्ध्या विवेकज्ञानेन कृतं स्वभावं योग्यतामनुसृतः पुमान्, आत्मना भगवत्प्रेरणया यद्यत्करोति तत्समस्तं सर्वोत्तमाय नारायणाय समर्पयेत् ।

इदं सर्वं तत्प्रेरणया कृतं तत्प्रीतयेऽस्तु इति ब्रूयादित्यर्थः। 'स्वभावमनुसृत' इत्यनेन अनादि [2]योग्यतापेक्षया पूर्वपूर्वकर्माधीनोत्तरकर्माणि कारयितुर्भगवतो वैषम्यनैर्घृण्ये परिहृते । [3]योग्यतापेक्षस्य यथा न स्वातन्त्र्यक्षतिस्तथाऽनुव्याख्यानादौ स्फुटम् । १६ ।

*२. प्रकाशिका*

विष्णुस्मरणपूर्वकं कर्माण्यनुष्ठाय तानि विष्णौ समर्पणीयानि इत्युक्तं 'यस्मिन् सर्वाणि' इत्यादिना। तत्र प्रमाणाकाङ्क्षायां भागवतवाक्यमेव पठति - *कायेनेति* । स्वभावं योग्यताम् । अनुसृतः पुमान् । आत्मना कर्त्रा । १६ ।

---

१. बुद्ध्या विवेकज्ञानेन इति क कोशे नास्ति ।

२. योग्यतापेक्षपूर्वकर्माधीन क. ख.    ३. योग्यनपेक्षस्य क.

### ३. तन्त्रदीपिका

एवं अध्यात्मभगवत्पूजामुक्त्वा तत्समर्पणमाह - *कायेनेति* । १६ ।

### सदाचारस्मृतिः

*( क्षराक्षरपुरुषोत्तमत्वं विष्णोरनुसन्धायोपास्य कृतकृत्यां भवेत् )*

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। १७ ।।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।। १८ ।।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।१९।।
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ।। २० ।।
इति गुह्यतमं शास्त्रं इदमुक्तं मयानघ ।
एतद् वुध्वा वुद्धिमान् स्यात् कृतकृत्यश्च भारत
।। २१ ।।

### १. आह्निककौस्तुभः

'निराशीः निर्ममो याति परम्' इति हरेः परत्वमुक्तम् । तत्र गीतावाक्यानि प्रमाणतया पठति *द्वाविति* । लोके [1]ईशितव्यवर्गे । पुरुषौ चेतनौ । क्षरश्चाक्षरश्चेति द्वावेव । सर्वाणि भूतानि ब्रह्माद्याः जीवाः शरीरक्षरणात् क्षराः । पुंशक्तिमत्वात् कूटस्थ इति पुंशव्दवाच्या श्रीः निर्विकारत्वात् कूटस्था, नित्यदेहत्वादक्षरेत्युच्यते । १७ ।

यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह - *उत्तमेति* । आभ्यामन्य एव उत्तमः पुरुषः, न त्वनयोरन्यतरः । 'परमात्मा व्यवस्थितः' इत्यादि श्रुतिषु प्रसिद्ध इत्यर्थे समाख्या । आत्मशव्दस्य चेतनपर्यायत्वात् युक्तिमप्याह - *य इति* । लोकत्रयं [2]तदुपलक्षितसर्वलोकमाविश्य विभर्ति धारयति पोषयति च । यो हि यस्य धारणादिकर्ता स तस्मादुत्तमो युक्तः ।



१. वर्गे ख. २. तदपेक्षितसर्व ख.

तदाविष्टस्य तन्नाशेन नाशः स्यादित्यत उक्तम् - *अव्यय इति* । विविधनाशरहितः । तत्कथमैश्वर्यादित्यत आह - *ईश्वर इति* । दुर्घटघटकत्वाख्यैश्वर्योपेतः । १८ ।

स च क इत्यपेक्षायामहमेवेति सप्रमाणमाह - *यस्मादिति* । यस्मांन्निमित्तात् क्षरं चातीतः अक्षरादप्युत्तमः, अतो लोके [1]पौरुपेयग्रन्थे, वेदे अपौरुपेयागमे च पुरुषोत्तम इति प्रसिद्धोऽहमस्मि । १९ ।

अत्रात्मनः तात्पर्यद्योतनाय वेत्तुः फलमाह - *यो मामिति* । यः अधिकारी । एवमुक्तरीत्या [2]यौगिकपुरुषोत्तमपदवाच्यं मां जानाति । असम्मूढः - पुरुषोत्तमत्वमपारमार्थिकं [3]अश्वकर्णादिवत्संज्ञामात्रत्वात् इति सम्मोहवर्जितः । स एव सर्ववित्, अस्यैव सकलशास्त्रार्थत्वात् । सर्वभावेन - सर्वप्रकारेण मां भजति - सेवते । २० ।

एतच्च नायोग्याय वाच्यमित्याह - *इतीति* । इत्युक्तप्रकारेण परमगोप्यमिदं सर्वोत्तमतया पुरुषोत्तमत्वरूपम् । शिष्यत इति शास्त्रं प्रमेयं मया अभिहितमित्यर्थः । सर्ववित् इत्याद्युक्तं ततः किमित्यत आह *एतद् बुध्वेति* । एतत् उक्तं प्रमेयं परोक्षतो ज्ञात्वा बुद्धिमान् [4]अपरोक्षज्ञानी स्यात् । ततः कृतकृत्यो मुक्तश्च स्यादिति । भारतेति पार्थं प्रति सम्बोधनम् ।

*२. प्रकाशिका*

'निराशीर्निर्ममो·याति परम्' इत्युक्तम् । तत्र भगवतः परत्वे गातावाक्यं प्रमाणयति । *द्वाविमावित्यादि कृतकृत्यश्च भारत इत्यन्तेन*। द्वावेवेति सम्बन्धः । इमौ प्रमितौ । पुरुषौ चेतनौ । लोके अवलोके पर्यालोचने कृते सति । अथवा [5]द्वावेवेत्यस्य उपर्युक्तयोः परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । इशितव्यवर्ग इत्यर्थः । सर्वाणि भूतानि ब्रह्मादयो जीवाः । क्षराः शरीरक्षरणात् । कूटस्थः पुरुषः महालक्ष्मी । 'पुल्लिङ्गेनोच्यते स्त्री च' इति वचनात् पुल्लिङ्गत्वम् । अक्षरः - देहनाशाभावात् । १७ ।

---

१. पौरुषेयागमग्रन्थे ख. २. योगिकं क. ३. अश्ववर्णादिवत् ग.
४. अपरो ज्ञानी ख. ५. द्वावित्यस्य ख.

यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह *उत्तम इति* । क्षराक्षराभ्याम् । न पुनरेतयोरेव मध्ये कश्चित् पुरुषोत्तमः कल्प्यः । तत्र श्रुत्यादिसम्मतिमाह - *परमात्मेति* । आत्मशव्दो चेतनपर्यायः । उक्तं च -

ब्रह्मादिजीवाः सर्वेऽपि शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वात् [1]अक्षरा तत्परो हरिः ।। इति ।

युक्तिमप्याह - *य इति* । *लोकत्रयमिति* । तच्चोपलक्षणम् । यो हि यस्य धारणपोषणकर्ता स तस्मादुत्तमो युक्तः । तत्प्रविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम् - *अव्यय इति* । तत्कथं ? ऐश्वर्यादित्याह - *ईश्वर इति* । १८ ।

स च क इत्यपेक्षायां अहमेवेति [2]सप्रमाणकमाह - यस्मात् इति । क्षरं चेत्यन्वयः । लोके पौरुषेयागमे । १९ ।

आत्मनस्तात्पर्यद्योतनाय ज्ञातुः फलमाह *यो मामिति* । एवं - न त्वश्वकर्णादिवत् संज्ञात्वेन एतत्पुरुषोत्तमत्वमपारमार्थिकमिति संमोहवर्जितः। सर्ववित्, अस्यैव शास्त्रार्थत्वात् । सर्वभावेन - सर्वप्रकारेण । २० ।

एतच्च न यस्मै [3]कस्मैचिद् वाच्यम् इत्याशयेनाह - *इतीति* । इदं सर्वविदित्याद्युक्तम् । ततः किमित्यत आह - *एतदिति* । बुद्धिमान् अपरोक्ष ज्ञानी । कृतकृत्यः मुक्तः । २१ ।

*३. तन्त्रदीपिका*

एवमियता प्रवन्धेन प्रतिपादितं ( न ) प्रामाणिकं क्वचिद्देवतान्तरा - णामाराध्यत्वस्य श्रवणादिति मन्दाशङ्कां श्रीकृष्णोक्तभगवद्गीताप्रमाणेन परिहरति - *द्वाविमौ इत्यादिना* । १७ - २१ ।

*सदाचारस्मृतिः*

***( विष्णोस्सर्वोत्तमत्वं सर्वाधारत्वं च प्रमाणसिद्धम् )***

**रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**

१. न क्षरा क. २. सप्रमाण ख. ग. ३. कस्मै चिद क.

ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः।।२२।।
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
[1]श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः।।२३।।
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।।२४।।

१. *आह्निककौस्तुभः*

उत्तमत्वं हरेर्भगवद्वाक्यान्तरेणाऽपि साधयति *रुद्रमिति* । ऋष्याद्या [2]देवानाश्रित्य वर्तन्ते इत्यध्याहार्यम् । देवा इन्द्रादयः रुद्रं सदाशिवम् आश्रिताः। स च ब्रह्माणं विरिञ्चं, स च मां हरिं रमाद्वारेणाश्रितः । अहं कञ्चिदपि देवं नाश्रित इत्यर्थः । अत्र [3]सर्वदेवाश्रयत्व अनन्याश्रयत्वाभ्यां परमत्वसिद्धिः । २२ ।

सर्वोत्तमत्वज्ञानपूर्वकं स्वविहितवृत्या भक्त्या भगवदाराधनमेव परमो धर्मः । सर्वोत्तमत्वज्ञानाभावे तद्विरुद्धः सकलोऽप्यधर्म इत्यभिप्रेत्य सर्वोत्तमत्वमर्थात् साधयन् गीताश्लोकद्वयं पठति - *ये म इति* ।

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ।।

इति पूर्वश्लोके मम सर्वोत्तमत्वात् मदर्पणादि कुर्वित्युक्तम् । तदिदं मे मतं कर्म ये मानवाः श्रद्धावन्तः, 'श्रद्धा त्वास्तिक्यबुद्धिः स्यात्।' इति उक्तप्रकारेण 'अत्रोक्तमस्ति, ममात्रास्ति प्रयोजनम्' [4]इत्यास्तिक्यबुद्धिमन्तः, अनसूयन्तो असूयादिविधुराः सन्तः अनुतिष्ठन्ति कुर्वन्ति ते मानवाः कर्मभिः करणैः ज्ञानादिद्वारा संसारान्मुच्यन्ते। किमुत [5]ज्ञानेनेत्यपिः कैमुत्ये । २३ ।

अकरणे वाधकं वक्ति - *ये त्विति* । ये मानवाः मनुजाः असूयादिदोषवन्तः एतत् पूर्वोक्तं मे मतं मदभिमतं कर्म नानुतिष्ठन्ति, तान् [6]सर्वज्ञानविमूढान् सर्वज्ञेयविषयकमिथ्याज्ञानोपेतान्, अत एव विवेकज्ञानविधुरान् । 'चिति संज्ञाने' इति धातोः । तत एव नष्टान् नरकयोग्यान् विद्धि जानीहीत्यर्थः ।

---

१. श्रद्धावन्तो न सूयन्तो क. ग. २. देवानाविध्य क. ३. सर्ववेदाश्रयत्व ख.
४. इत्यस्ति बुद्धिमन्तेभ्यः ख. ५. ज्ञानिना क. ग. ६. सर्वाज्ञानमूढान् क.

अत्र श्लोकद्वयेनोत्तमत्वज्ञान्यज्ञानिप्रशंसानिन्दाभ्यां सर्वोत्तमत्वे तात्पर्यमवगम्यते । अर्थवादस्य तात्पर्यहेतुत्वात् । 'अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इत्यन्य भगवत्पादवचनात् । २४ ।

## २. *प्रकाशिका*

प्रमाणवचनान्तरेण विष्णोः परत्वमुपपादयति - ***रुद्रं समाश्रिता*** इत्यादिना *विद्धि नष्टानचेतस* इत्यन्तम्। तेऽपि कर्मभिर्मुच्यन्त इत्यनेन [1]कर्मणां पृथक् साधनत्वं नोच्यते ये त्वेवं निवृत्तकर्मिणः तेऽपि ज्ञानद्वारा मुच्यन्ते । [2]किम्व -परोक्षज्ञानिनः ? उक्तं च -

[3]निवृत्तादीनि कर्माणि ह्यापरोक्षेश दृष्टये ।
[4]अपरोक्षेण दृष्टिश्च मुक्तेः किञ्चिन्न मार्गते ।
सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायाऽपरोक्षदृक् ।। इति ।

। २२, २३, २४ ।

## ३. *तन्त्रदीपिका*

देवतान्तराणाममुख्यत्वमित्येतदपि भारतवाक्येन स्पष्टयति - ***रुद्रमिति***। ब्रह्मा मामाश्रितः । अहं कमपि नाश्रितः । अथवा ब्रह्मा मां लक्ष्मीमाश्रितः। नाहं कञ्चिदुपाश्रित इति । २२ ।

एवमुपासकानां [5]विपरीतज्ञानिनां च फलमनर्थं चाह - ***ये मे मतमिति*** । २३, २४ ।

*सदाचारस्मृतिः*

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ।।२५।।
स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युः एतयोरेव किङ्कराः ।।२६।।

---

१. कर्म न पृथक् ख. २. किमु अपरोक्षज्ञानिन इति क कोशे नास्ति ।
३. गीताभाष्योदाहृतं नारायणाष्टाक्षरकल्पगतं वचनमिदम् ।

४. अपरोक्षेशदृष्टिस्तु इति प्राचीनपाठः । ५. अपज्ञानां च ख.

*१. आह्निककौस्तुभः*

ननु ये मे मतमनुतिष्ठन्ति नानुतिष्ठन्तीति द्वैविध्यमुक्तम्। एतदयुक्तम्। कारणाभावात् इत्याशङ्कापरिहाराय [१]सत्वतमस्स्वभाव एव कारणमित्याह *द्वाविति*। भूतानां जीवानां सर्गौ द्वावेव । तौ कौ ? दैव आसुरश्च । दैवशब्दो मुक्तियोग्यसात्विकजनवाचकः । आसुरशब्दः तदयोग्यतामसजनवाचकः । दैवो विष्णुभक्तियुतो यथा, तथा आसुरो विपरीतः विष्णुद्वेषपर इत्यर्थः । यथोक्तं भाष्ये -

"दैवीमेव सम्पत्तिं देवा [२]अभिगच्छन्ति । आसुरीमेव चासुराः । नैतयोरभिभवः कदाचित् । स्वभाव एव ह्यवतिष्ठत" इति ।

स्कान्दे च -

'असुरा आसुरेणैव स्वभावेन च कर्मणा।' इति । २५ ।

अत्र विहितं सर्वं कर्म विष्णुस्मरणसहकृतमेव कर्तव्यं, न तु तद्रहितमित्यत्र प्रमाणमाह - *स्मर्तव्य इति* । स्वस्वदेहे प्रविष्टो हरिः नित्यं स्मरणीय एव । न तु विस्मर्तव्यः । यतः सर्वे विधयः निषेधाश्च एतयोः स्मरणविस्मरणयोः क्रमात्किङ्कराः भृत्या एव । सर्वे विधयः हरिस्मरणकिङ्कराः । सर्वे निषेधाश्च विस्मरणस्य किङ्कराः । हरिस्मरणयुक्ता ये विधयः फलदाने समर्थाः न केवलाः। [३]स्वाम्यननुगृहीतानां भृत्यानां फलदाने सामर्थ्याभावात् । एवं निषेधा अपि तद्विस्मरणयुक्ता एव मुक्तिविरुद्धानर्थदाः । [४]विस्मरणस्य निषेधानां प्रति स्वामित्वेन तदसहकृतानां फलदानासामर्थ्यात् । तत्स्मरणयुक्त - वृत्रहत्यादिविकर्मणः अनर्थप्रदत्वाभावस्य शक्रादौ दृष्टत्वादिति भावः ।

यद्वा निषेधानां विस्मरणभृत्यत्वात् विस्मरणवति [५]पुंसि सर्वे निषेधा वर्तन्ते । स्वामिसहचारित्वात् भृत्यानाम् इति । २६ ।

*२. प्रकाशिका*

ये मे मतमनुतिष्ठन्ति नानुतिष्ठन्ति इत्युक्तम् । तदयुक्तम् । तद् द्वैविध्ये कारणाभावात् इत्याशङ्कायामस्ति कारणमित्याह - *द्वाविति* । उदाहृता

---

१. सत्वदमस्स्वभाव ख. २. अनुगच्छन्ति ग. ३. स्वाम्यनुगृहीतानां ग.
४. विशरणस्य क. ५. पुत्रे ख.

चात्र श्रुतिर्भाष्ये - 'दैवीमेव सम्पत्तिं देवा अभिगच्छन्ति आसुरीमेवासुराः । नैतयोरभिभवः कदाचित् । स्वभाव एव ह्यवतिष्ठते।' इति ।

स्कान्दे च -

असुरा आसुरेणैव स्वभावेन च कर्मणा ।
ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ।
[1]देवा देवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग् ज्ञानेन [2]परमां गतिं गच्छन्ति वैष्णवीम् ।
नानयोरन्यथाभावः कदाचित् क्वाऽपि विद्यते ।।

इति । २५ ।

'स्मृत्वा विष्णुं समुत्थाय' इत्यादिना विष्णुस्मरणस्य [3]सर्वकर्मव्यतिषङ्ग उक्तः । तत्र प्रमाणमाह - *स्मर्तव्य* इति ।२६, २७ ।

### ३. *तन्त्रदीपिका*

उपासका विपरीताश्च क इति जिज्ञासायामाह - *द्वाविति* । अत्र कश्चिद् विशेषः । 'दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रुणु' इत्युदाहृत - प्रमाणस्योत्तरार्धम् । अत्र 'विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुर' इति श्रूयते । तत्कथमिति ? अत्र केचित् - नेदं गीतास्थं प्रमाणमपि तु प्रमाणान्तरमेवेति न दोष इत्याहुः ।

अत्रायं विशेषः - भगवद्भक्तस्तद् विपरीतश्च क इति जिज्ञासायां 'दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रुणु' इत्यभिधानेऽपि तत्परिज्ञानं स्पष्टतया पुनर्न जायत एवेति भगवानाचार्यः शिष्यानुग्रहार्थं, 'दैवो विस्तरशः प्रोक्त' इति पूर्वोक्तसन्दर्भस्य 'आसुरं पार्थ मे श्रुणु' इत्युत्तरसन्दर्भस्य [4]महाभिप्रायकथनार्थमेतद् व्याख्यानं, (कृतवान्), 'विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुर' इति । अधुना देवासुरविवेकस्तु स्पष्टतया जायत एवेति [5]भक्तानुग्रह एव केवलं कृतमिति ज्ञेयम् । २५ ।

---

१. दिवा क.
२. चरमां ख.   ३. कर्मव्यतिरेकः ख.
४. महाभिप्राय इति क कोशे नास्ति ।   ५. भक्त्यनुग्रह एव ख.

एवमियता प्रवन्धेनोक्तमुपसंहरति - *स्मर्तव्य* इति । सर्वे विधिनिषेधाः एतयोरन्तर्भूताः स्युरिति शेषः । एतदुक्तकरणेन सर्वं फलं भवतीत्यर्थः । भृत्यान् प्रति यमस्य सम्वोधनं किङ्करा इति । अथवा इतरे विधिनिषेधाः एतवोः किङ्कराः, अमुख्या इत्यर्थः । २६ ।

*सदाचारस्मृतिः*

धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे । । २७ । ।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
नित्यं भवेच्च मन्निष्ठो वुभूषुः पुरुषस्तथा । । २८ । ।

*१. आह्निककौस्तुभः*

हरिभक्तिपूर्वकं कृत एव धर्मो, नान्य इत्यत्र प्रमाणमाह - *धर्म इति* । हे अच्युत तव भक्तैः [1]प्रमादादिना कृतः अधर्मोऽपि अधर्मतया प्रतीयमानोऽपि, धर्मः धर्मफलजलकः, यथा वृत्रहत्यादिः । [2]एकादशीश्राद्धत्यागो वा । हे हरे, न भक्तैः नसमासोऽयम् । अभक्तैः कृतो धर्मोऽपि धर्मतया प्रतीयमानोऽपि एकादशीश्राद्धादिः पापफलको भवति । २७ ।

विष्णुभक्त्यैव कर्माधिकार इत्यभिप्रेत्य भक्तिविधायकं गीतावाक्यमाह - *मन्मना* इति । मद्गतमना भव । मयि भक्तिमान् मद्याजी मामुद्दिश्य यष्टा भव । मद्वन्दनं च कुर्विति पार्थं प्रति वासुदेववाक्यम् ।

उक्तवचसां हेतुतां प्रकटयन् गृहाश्रमिणा [3]भक्तिपूर्वा स्मृतिः कार्येति विधत्ते भगवान् मूलकारः - *नित्यमिति* । 'तत' उक्तरीत्या विष्णुस्मृत्यादौ मानानां विद्यमानत्वात्, वुभुषुः फलप्राप्तीच्छुः मुमुक्षुरिति यावत् । भू प्राप्ताविति धातोः । नित्यं प्रत्यहोरात्रं तस्मिन् विष्णौ निष्टा.भक्तिर्यस्य सः तन्निष्ठः विष्णुभक्तिमान् भवेदित्यर्थः । केचिदिदमपि प्रमाणवाक्यशेषतया व्याचक्रुः । ते पूर्वस्योत्तरस्य [4]वाक्यस्य गीतावाक्यतां विदित्वोक्तवन्तः । २८ ।

---

१. प्रमोदान् क. २. एकादशीत्यागो वा ग.
३. भक्तिपूर्वा इति क कोशे नास्ति । ४. वाच्यस्य ग.

## २. प्रकाशिका

विष्णुभक्त एव कर्मादिष्वधिकारीत्युक्तम् । तत्प्रमाणेन दृढयति - *मन्मना इति* । वुभूपुः - ज्ञानेच्छुः । २८ ।

## ३. तन्त्रदीपिका

मनुष्याणां परमालस्यप्रकृतिकत्वात् क्वचिदन्यथाप्रसक्तेः का गतिरिति शङ्कायां [1]उक्तप्रकारेण क्वचिन्महात्मनामननुवर्तनेऽपि क्वचिदधर्मकरणेऽपि न दोपो वैष्णवानामित्याह *धर्म इति* । न भक्तैरिति न समासः। तद्यथा 'वृत्रं हत्वा [2]महान् अभवत्' इति। अभक्तैः कृतो धर्मस्तु पापमेव भवतीत्यपि, 'नैव गृह्णन्ति तत्परम्' इत्यादि प्रमाणसिद्धम् । २७ ।

पुनरुदाहृते दार्ढ्याय प्रमाणमुदाहरति *मन्मना भवेति* ।

## सदाचारस्मृतिः

( *वानप्रस्थाचारक्रमः* )

एष नित्यः सदाचारो गृहिणो वनिनस्तथा ।
वैश्वदेवं वलिं दन्तधावनं चाप्यृते वटोः ।। २९ ।।

## १. आह्निककौस्तुभः

उक्तं गृहस्थाचारं वानप्रस्थेऽतिदिशति *एष इति* । एष गृहिण आचारः शौचाचमनादिकर्मसमूहः, तथा तादृश एव तथा [3]वनिनो नित्यः नियमेन कर्तव्यः ।

नन्विदमयुक्तम् । वनिन्यसम्भाविनां [4]पशुसंस्थानादिनानाचाराणां गृहस्थे सत्वात् । अतोऽप्युक्तम् - *एष इति* । सन्त्वप्यन्ये वाचारास्तथाऽपि एष एव विष्णुस्मृत्याख्य आचारो नित्यो ध्रुवः, आवश्यक इति यावत् । नान्यो मायावादिभिरुक्त इत्यर्थः ।

वानप्रस्थाश्रमकालस्तु -

गृहस्थस्तु यदा पश्येत् [5]वलीपलितमात्मनः ।

---

१. उक्तप्रमांणेन क. २. मना भवत् ख. ३. धनिनो क.
४. पशुसंघादि ग. ५. वलीपालितमासनः ख.

अपत्यस्यैव चापत्यं तदारण्यं समाविशेत् ॥

इति स्मृत्युक्तः । तद्धर्मास्तु भार्यां पुत्रे न्यस्य सह वा आदायाग्न्युतोऽरण्ये [1]वन्यैः पितृदेवता अतिथींश्च पूजयन् त्रिषवणः कृच्छ्रादिभिः कालं नीत्वा शक्तिह्रासे हुताशने देहं त्यजेत् इत्यादयः सप्तमस्कन्धे प्रसिद्धाः विस्तारभिया नेहोच्यन्ते ।

*( कलिवर्ज्यनिरूपणम् )*

वानप्रस्थाश्रमः कलौ त्याज्य इति याज्ञवल्क्यः -

'युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम् ।
देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः ॥
[2]दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
महाप्रस्थानगमनं गोपशुश्च सुराग्रहः ।
असवर्णासु कन्यासु विवाहश्च द्विजातिषु ।
प्रायश्चित्तविधानं तु विप्राणां मरणान्तिकम् ।
संसर्गदोषः पापेपु मधुपर्के पशोर्वधः ।
पुत्रं दत्वेतरेषां तु पुत्रत्वेन परिग्रहः ।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकम् ।
कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः ।'

इति ।

उक्ताचारान् ब्रह्मचारिपु कांश्चित् सङ्कोच्यातिदिशति - *वैश्वदेवमिति* । वैश्वदेवं पितृयज्ञं होमादिकं कर्म बलिहरणं दन्तधावनं च ऋते इतरत्सर्वं शौचस्नानाद्यारभ्य भुक्तिपर्यन्तं नित्यं वटोरपि एवमेव, गृहस्थवदेव कार्यम् । एवमेवेति [3]पूर्ववाक्येनैव सम्बध्यते, न तूत्तरत्रयेण । यतेर्दन्तधावनाभावशङ्का स्यादिति ज्ञेयम् । ब्रह्मचारिणो धर्मा भागवतादवगन्तव्याः । विशेषधर्माश्च समिद्धोम इत्यग्रे निरूपयिष्यति । २९ ।

## *२. प्रकाशिका*

तदेवं गृहस्थस्य कर्माण्युपदिश्य इतरेषामतिदिशति - *एष इति* । एवं गृहिण आचार उक्तः, तथा तादृश एव वनिनोऽपि ।

---

१. धन्यैः क. धान्यैः ग.  २. भुक्तक्षताया क.
३. पूर्ववाक्येनैव इति क कोशे नास्ति ।

ननु सोमसंस्थादयो अन्येऽपि गृहिणः आचाराः सन्ति । तत्कथमुच्यत *एष आचार इति* । तत्परिहाराय नित्यग्रहणम् । सत्यं सन्त्यन्येऽप्याचाराः तथाऽपि एष आचारो नित्यः ध्रुवः, आवश्यकः । [1]अन्येषामाचारणां सत्वेऽपि देशकालादिवैगुण्येनानुष्ठातुमशक्यत्वान्न नित्यत्वम् । अपि तु अस्मदुक्त आचार एव नित्यः । यथा चैतत्तथोक्तं प्राक् ।

*(वानप्रस्थकालः धर्मविशेषाश्च)*

वानप्रस्थाश्रमकालस्तूक्तः शङ्खेन -

गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ।।

वानप्रस्थधर्मविशेषाः शङ्खेनोक्ताः -

पुत्रे [2]दारान् विनिक्षिप्य तथा वाऽनुगतो वनम् ।
अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत् ।।
यदाहारो भवेत्तेन पूजयेत् पितृदेवताः ।
तेनैव पूजयेद् विद्वान् अतिथिं समुपागतम् ।
ग्रामादाहृत्य चाश्नीयात् अष्टौ ग्रासान् समाहितः ।
स्वाध्यायं च तथा कुर्यात् जटाश्च विभृयात्तथा ।
तपसा शोषयेन्नित्यं स्वकं चैव कलेवरम् ।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ।
वर्षास्वाकाशशायी च [3]नक्ताशी च सदा भवेत् ।
चतुर्थकालिको वा स्यात् षष्ठकालिक एव च ।
कृच्छ्रैर्वाऽपि नयेत् कालं ब्रह्मचर्यं च पालयेत् ।
एवं तीर्त्वा वने कालं द्विजो ब्रह्माश्रमी भवेत् । इति

*(ब्रह्मचारिधर्माः)*

उक्ताचारान् ब्रह्मचारिणोऽप्यतिदिशति - ***वैश्वदेवमिति*** । अत्र वटोरेष नित्यः सदाचार इति योजना । सामान्यातिदेशं सङ्कोचयति - ***वैश्वदेवं*** इत्यादिना । अत्र वैश्वदेवशब्देन ब्रह्मयज्ञव्यतिरिक्ताश्चत्वारो यज्ञा गृह्यन्ते । ब्रह्मयज्ञो

1. अन्ये आचारा सन्तोऽपि ख. 2. दारान् क. 3. त्यक्ताशी ख.

व्रह्मचारिणोऽप्यस्तीत्युक्तत्वात् ।[1]भूतयज्ञस्य वलिशव्देन पृथग् ग्रहणात् । पृथक् वलिग्रहणं वैश्वदेवशव्देन पञ्चयज्ञानां ग्रहणनियमो नास्तीति दर्शयितुम्। अतिदेशेन धर्माणां सिद्धत्वात् वर्ज्या उच्यन्ते ।

तत्र याज्ञवल्क्यः -

मधु [2]मांसाञ्जनोच्छिष्ट[3]शुक्तं स्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत् ।

व्याधितस्य न नियमः ।

तथा च वशिष्ठः -

'स चेद् [4]व्याधिपीडितः गुरोरुच्छिष्टशेषमौषधार्थं सर्वं प्राश्नीयात्' इति। अञ्जनतैलादिना शरीरस्य । अञ्जनादिना नेत्रयोः । एतन्निषेधोऽप्यौषधादन्यत्र।

तथा च स्मृतिः -

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मण [5]काम्यं च गुरोर्वचनमौषधम् ॥

उच्छिष्टं गुरुव्यतिरिक्तस्य परस्य वर्जयेत् । तथा च *वशिष्ठः* - 'उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टम् उच्छिष्टोपहतं च' इति । [6]गुरुस्वरूपं तूक्तम् - 'निषेकादिकृत् । शुक्तं तु परुषं वचः पर्युषितान्नं च ।' स्त्रीशव्देन तद्विषये प्रेक्षणालपने लक्ष्येते । तथाह *गौतमः* - 'स्त्रीप्रेक्षणालपने न कर्तव्ये' इति ।

भास्करालोकने तु मनुना विशेषो दर्शितः -

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥ इति ।

अश्लीलं सभाऽयोग्यं वचः । परिवादः [7]सदसद्रूपपरदोषप्रकाशनम् । आदिशव्दात् गन्धमाल्यनिषेधः ।

---

१. भूतज्ञस्य क. ४. व्याधिपीतकः ख.
२. मांसाशन ख. ५. कन्या च ख.
३. शुक्ल क. ६. गुरुस्वकृल्लक्षणो क. ७. सद्रूपससत्प्रकटनम् ख.

मनुः -

वर्जयेद् गन्धमाल्यं [1]मधु ------ रसान् स्त्रियः ।
मुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ।
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानट् धारणं [2]( तथा )।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ।
द्यूतं च जनवादं च परिवादं तथानृतम् ।
स्त्रीणां च प्रेक्षणालापमुपघातं परस्य वै ।
एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् ।
कामाद् हि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ।

इत्यादि ब्रह्मचारिणो वर्ज्यानि । ब्रह्मचारिणस्तु विशेषधर्मान् आचार्यः स्वयं वक्ष्यति । २९ ।

### ३. *तन्त्रदीपिका*

एवमुदाहृतप्रमेयं सप्रमाणमुक्त्वा अधिकारिणामवान्तरविशेषं आह - *एष नित्य* इति । गृहस्थस्य वानप्रस्थस्यायमेव धर्मः । वटोस्तु विशेषमाह - *वैश्वादेवमिति* । वैश्वदेवं वलिं दन्तधावनं [3]च ऋते वटोरप्ययमेव धर्म इत्यर्थः । २९ ।

### *सदाचारस्मृतिः*

( *यतिधर्मनिरूपणम्* )

एवमेव यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम् ।।३०।।

### १. *आह्निककौस्तुभः*

उक्ताचारं किञ्चित्सङ्कोचेन सन्न्यासिनामतिदिशति - *एवमेवेति* । यतेः कुटीचक - वहूद - हंस - परमहंस - भेदेन सन्न्यासिचतुष्टयस्य [4]स्वसंपादितेन धनेन विना, अयाचनया तत्कालोपपन्नेन द्रव्येण दन्तधावन देवपूजादि यतिः सदा कुर्यात् । मूलमन्त्रैः प्रणवाष्टाक्षरादिमूलमन्त्रैः सदा त्रिकालं नित्यदा स्नानं, तैरेव मन्त्रैः विष्णोरेव प्रणवप्रतिपाद्यस्यैव तर्पणमर्घ्यादि । न तु

१. XXXXXX क. ग. २. अत्र मूलकोशे ग्रन्थपातः । ३. चर्ते धर्म वटोरेव ।
४. स्वादितेन ग.

गृहस्थानामिव पितृवस्वाद्यन्तर्यामि अनिरुद्धादीनां तर्पणमित्यर्थः । ३० ।

२. *प्रकाशिका*

उक्ताचारान् सन्न्यासिनोप्यतिदिशति *एवमेवेति* । देवपूजादिकमयाचित -तत्कालोपपन्नचन्दनपुष्पादिना यतिः कुर्यात् । न तु स्वयं सङ्गृहीतेनेत्यर्थः। [1]अयाचिताऽलाभे जलेनैव सर्वोपचारान् कुर्यात् । 'एवमेव यतेः' इत्याद्यस्य सङ्कोचः स्वीयवित्तेन विनेत्यादि । सङ्कोचान्तरमप्याह - *मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम्* इति । मूलमन्त्रैरित्येतत् स्नाने तर्पणे चान्वेति । विष्णोः प्रणवादिदेवतारूपस्य तर्पणमर्घ्यादिरूपः ।

*(कुटीचकादि यतीनां धर्मविशेषाः)*

अयं भावः - यतयश्चतुर्विधा भवन्ति । तथा च हारीतः -

चतुर्विधा भिक्षवः प्रोक्ता सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् [2]ज्ञानवृत्तिभेदकृतं स्मृतौ ।
कुटीचको वहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंस उत्तमस्तु परः परः ।। इति

तत्र चतुर्णां वृत्तिः स्कन्दपुराणे दर्शिता -

कुटीचकस्तु सन्न्यस्य स्वस्त्यारते वेश्म नित्यशः ।
भिक्षामादाय भुञ्जीत स्ववन्धूनां गृहे भवन् ।
शिखा यज्ञोपवीती स्यात् त्रिदण्डः सकमण्डलुः ।
वहूदकस्तु सन्न्यस्य वन्धुपुत्रादिवर्जितः ।
[3]सप्तागारं चरेद् भैक्ष्यं एकान्नं च परित्यजेत् ।
हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
कन्था कौपीनमाच्छाद्यमङ्गवस्त्रं वहिःपटम् ।
एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।
कौपीनाच्छादनं वस्त्रं [4]कन्थासीतं निवारणम् ।
अक्षमालां च गृह्णीयात् वैणवं दण्डमव्रणम् ।

---

१. अयाते लाभे क. २. XXXXX स्मृतौ क.
३. सप्तवारं क. ४. कन्याः क. अर्थः न ज्ञायते ।

माधूकरं तथैवान्नं परमो हंस आचरेत् ।

तत्र वहूदक कुटीचकयोः सन्ध्यावन्दनादीनि धर्माणि । तथा च वोधायनः -

उषः काले समुत्थाय कृत्वा शौचं यथाविधि ।
दन्तान् विशोध्य चाचम्य पर्ववर्ज्यं यथाविधि ।
स्नात्वा चाचम्य विधिवत् तिष्ठन्नासीन एव च ।
[1]विभ्र ज वित्रं चाक्षं प्य क्षसूत्रं करद्वये ।
तद्वच्च विधिवत्सन्ध्यां उपास्याह्निकमाचरेत् ।
पूर्ववत्तर्पयित्वा तु यजेत् सम्यक् समाहितः ।। इति

तत्र कुटीचकवहूदाभिप्रायेण विष्णोरेव च तर्पणमित्युक्तम् । कुटीचकादेस्तु ब्रह्मयज्ञशेषभूततर्पणस्य सत्वात् । [2]स्वपित्रादि तद्विधानवत्स्वान्त - र्यामिणामनिरुद्धादीनां गृहस्थादिक्रमेण तर्पणं नास्तीत्यभिप्रायेण विष्णोरेवेत्युक्तम् । ३० ।

*३. तन्त्रदीपिका*

यत्याश्रमिणां किमयं न कर्तव्य इत्यत आह - *एवमेवेति* । एवं वटोरिव यतेरपि द्रष्टव्यम् । तत्रापि विशेषमाह - *स्वीयवित्तेनेति* । द्रव्यसङ्ग्रहं विना शिष्यादिभिरानीतं पूजार्थं यावत्तावदेवेत्यर्थः । वटोस्तु स्वकीयद्रव्येणाऽपि भगवत्पूजनं युज्यत एवेति भावः । एवं सायं प्रातः भिक्षीतेत्याद्यपि द्रष्टव्यम् । यतीनामेकवारमेव भोजनम् । विशेषप्रमाणानि तु विस्तरभयान्न लिख्यन्ते । यतेरितोऽपि विशेषमाह - *मूलमन्त्रैरिति* । सदेति त्रिकालोक्तिः । तथा च सर्वत्र मूलमन्त्रमन्तरा [3]इतरदेवतामन्त्रानपेक्षया इत्यर्थः । ३० ।

*सदाचारस्मृतिः*

*( हंस - परमहंसयोर्विशेषधर्मनिरूपणम् )*

**विशेषो निष्क्रिययतेरजलाञ्जलिता तथा ।**

---

१. कोशद्वयेप्यक्षराणि लुप्तानि । अर्थो न ज्ञायते ।



२. ग्रन्थपातो दृश्यते । अर्थो न स्पष्टः । ३. इतरे देवा मन्त्रापेक्षया

तर्पणं तु हरेरेव यतेरन्यस्य चोदितम् ।
समिद्धोमो वटोश्चैव स्मृत्वा विष्णुं हुताशने ।।३१।।

*१. आह्निककौस्तुभः*

यतिशब्देन सामान्यतः प्राप्तयोः हंसपरमहंसयोः सङ्कोचमाह - *विशेष इति* । यतिचतुष्टयमध्ये निष्क्रिययतेः - निष्क्रान्ताः क्रियाः होमादयो यस्मात्तस्य। हंसस्य परमहंसस्य च विशेषोऽस्ति तमेवाह - *अजलाञ्जलितेति* । जलाञ्जलिः ब्रह्मयज्ञादि। [1]तदुपलक्षितपञ्चयज्ञाभावो अजलाञ्जलिता । तथा नित्यं भवेत् इत्यर्थः ।

ननु निष्क्रिययतेरित्युक्तमयुक्तम् । यतीनामपि जपक्रियादिसद्भावात् इत्यतो नात्र [2]क्रियानिवृत्तिरभिमतेत्याह - *तर्पणं त्विति* । अन्यस्य वहूदकुटीचकाभ्यामन्यस्य यतेर्हंसस्य परमहंसस्य च हरेरेव प्रणवादिदेवतारूपस्य विष्णोस्तर्पणम् अर्घ्यादि । उपलक्षणमेतत् । स्नानगायत्रीजपार्चनादि च चोदितमेव विहितमेवेत्यर्थः । तर्पणं तु हरेरेव स्वाश्रमोक्तरीत्या कार्यं न देवदित्रयस्येति वा।

अयमत्र समुदायार्थः - कुटीचक - वहूद - हंस - परमहंसभेदेन चत्वारो यतयः । तत्र शिखायज्ञोपवीती त्रिदण्डः सकमण्डलुः यावज्जीवं पुत्रदत्तान्नादः कुटीचकः । त्रिदण्डः पुत्रादिवर्जितः भिक्षान्नभोक्ता वहूदः ।अनयोः सन्ध्यादीनि कर्माणि सन्त्येव । [3]एकवैणवः कौपीनादिपटैर्युतः भिक्षापात्रादिमान् हंसः । एकदण्डः कौपीनाच्छादनो मधुकरवृत्तिः परमहंसः इत्यादि गीतातात्पर्यटीकायां [4]स्पष्टम् । हंसपरमहंसयोरपि गायत्री वर्तत एव। तत्त्यागं वदतां [5]सन्ध्यागायत्री नास्तीति आशय इत्यन्यत्र तन्त्रसारसङ्ग्रह विवरणे स्फुटमिति ।

अत्र यत्याश्रमे अधिकारः सर्वेषामप्यस्ति । 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहात्' इति भागवतोक्तेः । यत्तु 'अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्' इति वचनं, तत्तु द्विर्जायत इति योगेन त्रिवर्णपरम् ।

---

१. तदुपेक्षित क. २. क्रियावृत्ति ख.
३. एकाणव ख. ४. XXXXX तेति क. ५. XXXXX ख.

तद्धर्मास्त्वेकादशस्कन्धे स्पष्टाः ।

एवं सन्न्यासिनामाचारान् उक्त्वा इदानीं पुनः सिंहावलोकनन्यायेन वटोर्धर्ममाह - *समिद्धोम* इति । समिद्धोमः - समिद्भिर्होमः अग्निकार्याख्यः हुताशने यज्ञपुरुषे विष्णुं [1]परशुरामाख्यं हरिं स्मृत्वैव चिन्तयित्वैव वटोः ब्रह्मचारिणः विशेष आचारः कार्य इत्यन्वयः । ३१ ।

*२. प्रकाशिका*

हंसपरमहंसयोः सङ्कोचमाह - *विशेष इति* । निष्क्रान्ता क्रिया यस्य हंसादेर्यतेः तथा कुटीचकादिवदेव वैराग्यादि । ततोऽधिकं [2]*चाजलाञ्जलितेति*। तदुपलक्षितब्रह्मयज्ञादि कर्माभावः ।

यदुक्तं निष्क्रिययतेरिति, तत्र सर्वक्रियानिवृत्तिर्नाभिमतेत्याह - तर्पणं त्विति । नास्माभिः सर्वक्रियानिवृत्तिः हंसादेरुक्ता । किन्तु तर्पण - शब्दोपलक्षितमर्घ्यादिकमस्त्येव । गायत्रीत्यागाभावात् ।

ये तु यतीनां गायत्रीत्यागमाहुः तेषामेतद्वचनविरोधः । तथाहि; हारीतः -

चत्वारोप्याश्रमा ह्येते सन्ध्यावन्दनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते [3]यद्यप्युग्रतपोधराः ।। इति

बोधायनोऽपि -

अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्रा कथं ते ब्राह्मणाः स्मृताः ।।

इति । स्मृत्यन्तरेऽपि -

सायं प्रातः सदा सन्ध्यां ये विप्रा न उपासते ।
[4]कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ।।

इति । तस्मात् गायत्र्यादिना अर्घ्यादित्यागो न यतीनाम् ।

---

१. परशुदामार्यं ख.

२. चाञ्जलिता क.

३. यद्यप्युग्रतपो क. ४. काले क.

ननु उक्तवाक्येभ्यो मार्जनादीन्यपि यतीनां प्राप्नुवन्ति इति चेत्, मैवम् । सन्ध्याशब्दस्य अर्घ्ये मुख्यत्वात् । अर्घ्यस्य प्राधान्यात् । अत एव सूतकादावर्घ्यानुष्ठानमस्तीत्युक्तं प्राक् ।

कण्वः -

[1]एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत् ॥

संवर्तः -

अष्टौ भिक्षास्समादाय स मुनिः पञ्च सप्त च ।
अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः ॥

मनुः -

यथोक्तान्यानि कर्माणि [2]परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्यात् वेदाभ्यासे च यत्नवान् ॥

अत्र वेदः प्रणव इति केचित् । वेदविस्मरणस्य ब्रह्महत्यासमत्वेन याज्ञवल्क्यादिभिरभिधानात् । अत एव स्मृत्यन्तरम् -

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
उपवासात् परं भैक्ष्यं दया दानाद् विशिष्यते ॥

एकाक्षरः प्रणवः । ब्रह्म - वेदः । तथा -

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत कृषिको वर्षणं यथा ।
अभिवादांस्तितिक्षेत [3]नावमन्येत कञ्चन ।
न च सन्देहमाश्रित्य वैरं कुर्वीत कुत्रचित् ।
सन्निरुद्ध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हित्वा च भूतानां अमृतीभवति द्विजः ॥ इति ।

'स्मृत्वा विष्णुम्' इत्युपक्रमात् 'स्मृत्वा विष्णुं हुताशने' इत्युपसंहारात् 'गायत्र्यास्त्रिगुणं विष्णुं ध्यायन् अष्टाक्षरं जपेत्' 'एवं सर्वोत्तमं ध्यायन्' 'भुञ्जीत हृद्गतं विष्णुं स्मरन्' इत्यभ्यासात्, विष्णुस्मरणस्य मानान्तरा - प्राप्तत्वेनापूर्वत्वात्, 'स्मर्तव्यः सततं विष्णुः' इत्यादौ 'सर्वे विधिनिषेधाः स्युः'

---

१. नैकरात्रे ख. २. परिधाय ख. ३. नाभिमन्येत ख.

इत्यादौ फलवत्वनिन्दारूपार्थवादाभ्यां चास्य सदाचारस्मृतिशास्त्रस्य विष्णुस्मरण [1]व्यतिषङ्गविधाने तात्पर्यमवगम्यते । ३१ ।

### *३. तन्त्रदीपिका*

सर्वयतिसाधारण्येनेत्थमुक्त्वा तत्रापि विशेषमाह - *विशेष इति* । तथा च 'कुटीचको वहूदश्च हंसः परमहंसकः । चतुर्धा यतयः प्रोक्ताः' इत्युक्तेषु जलाञ्जलित्वं - गायत्र्या अर्घ्यप्रदानं नास्ति ।

हरेरेव तर्पणं कर्तव्यमित्युक्त्वा यतिव्यतिरिक्तस्य विशेषमाह - *यतेरन्यस्येति* । [2]यत्यन्याधिकृतस्येत्यर्थः । तथा च यतिव्यतिरिक्तानां वटोश्च समिद्धोम एवेति भावः ।

तथा चोक्तं यतिलक्षणम् -

कुटीचकस्तु चान्यस्य स्वे स्वे कर्मणि नित्यशः ।
भिक्षामादाय भुञ्जीत स्ववन्धूनां गृहेऽथ वा ।
शिखा यज्ञोपवीती स्यात् त्रिदण्डः सकमण्डलः ।
सपवित्रं सकाषायो गायत्रीं च जपेत् सदा ।
वहूदकस्तु सम्प्रोक्तो वन्धुपुत्रादिवर्जितः ।
[3]सापागाराश्चरेद् भैक्ष्यमेकान्नं च परित्यजेत् ।
हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
कन्था कौपीनयुगलं अङ्गवस्त्रं करे पटम् ।
एकं तु [4]वेणुदण्डं तु धारयेन्नित्यमादरात् ।।

इत्यादि द्रष्टव्यम् । ३१ ।

### *सदाचारस्मृतिः*

*( मुख्येज्यः विष्णुरेव । अन्ये देवता परिवारतयैव पूज्या न स्वातन्त्र्येण )*

**सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारत एव तु ।। ३२ ।।**

---

१. XXXXX ख. २. यत्यध्यायस्य क.
३. मातृकाद्वये [illegible] । अर्थो न ज्ञायते । ४. वीणादण्डं च ख.

*१. आह्निककौस्तुभः*

ननु 'स्मृत्वा विष्णुं समुत्थाय' इत्यारभ्य विष्णोः स्मरणं विहितम्। तदयुक्तम्। सन्ध्यादि [1]कर्मणामिज्यादेवतास्मरणाविनाभूतत्वेन सूर्यादिस्मरण - विधानमेव युक्तम्। नानिज्यमानस्य विष्णोरित्यत आह - *सर्ववर्णाश्रमैरिति*। सर्ववर्णिभिराश्रमिभिश्च विष्णुरेक एव सदा सन्ध्यादिकालेऽपि इज्यते पूज्यते मुख्यतः।

अयं भावः। सर्वकर्मणां देवता हरिरेव। [2]कर्मपराणां सन्ध्यादिविधीनामपि विद्यात्वात्। 'प्रभुर्हि सर्वविद्यानां परो नारायणो हरिः' इति ऋग्भाष्योक्तेः। सन्धिकालोपास्यत्वाद् वा सम्यक् ध्येयत्वाद् वा सन्ध्यापदवाच्यो हरिरेवेति। ननु विष्णुरेवेज्यत इत्युक्तमयुक्तम्। तन्त्रसारादौ रमादीनामपि याज्यत्वोक्तेरित्यत आह - *रमाब्रह्मादय इति*। रमाब्रह्मादयो देवाः तस्य हरेः परिवारत एव। [3]अङ्गदेवतात्वेनैव सेवकत्वेनेति यावत्। इज्यन्ते, न तु स्वातन्त्र्येण। विष्णोरिव प्राधान्येनेत्यर्थः। 'परिवारतया' इति पाठे सेवक-सेवकतयेत्यर्थः। 'परिवारतया ग्राह्या अपि हेयाः प्रधानतः' (ब्र.सू.अ. 1.1.3) इत्यन्यत्राऽपि भगवत्पादोक्तेः। रमादिष्वपि विष्णोरेवान्तर्यामितया [4]तन्मानतया वा मुख्येज्यत्वमिति तात्पर्यमभिप्रेतम्।

न च विष्णोः सर्वनामवाच्यत्वमप्रमाणकम्। 'ह्रदं न हि त्वा [5]न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना' इति श्रुतिसिद्धत्वात्। हे इन्द्र! यानि कानिचिद् [6]ब्रह्माणि तानि सर्वाणि सर्वे वेदाः त्वां प्रति न्यृषन्ति गच्छन्ति। तत्र दृष्टान्तः, ऊर्मयो ह्रदं न, ह्रदमिव। अत एव सर्वे वेदास्तव वर्धनास्त्वामेव वर्धयन्ति। तव स्तुतिरूपा इत्यर्थः।

'अव स्वराति गर्गरो गोधा परिसनिष्कणत् पिङ्गा परि च [7]निष्कणदिन्द्राय ब्रह्मोद्यतम्' इति मन्त्रवर्णान्तरं चात्र मानम्। अयं मन्त्रः कर्मनिर्णये व्याख्यातः - गर्गरः कृकलासः कलशो वा। इन्द्राय परमार्थम् उद्यतं परमात्मप्रतिपादनाय

१. कर्मेज्यदेवता क. २. कर्मनराणाम् ख. ३. अण्डगत्वेन क.
४. तत्तन्मानतया ख. ५. प्रत्यहं तूर्मयो ख.
६. ब्रह्मणे क. ७. निश्चकणदिन्द्रियाय ख.

प्रवृत्तं ब्रह्म । द्वितीयैकवचनमिदम् । भगवद्ज्ञानाय प्रवृत्ता वेदा इतीममर्थमिति यावत् । अवस्वराति स्वरति गर्गरो यं शब्दं वदति स शब्दः विष्णुप्रतिपादकवेदरूप एव । एवं गोधा [1]पञ्चनखविशेषः । यं च इन्द्रायोद्यतं ब्रह्म; परिचष्कणत् अवदत् ।

केचिद् गर्गरगोधापिङ्गाद्या वाद्यविशेषाः तेऽपि वेदाः प्रवृत्ता इति वदन्ति इत्याहुः ।

'ता वा एताः सर्वा ऋचः सर्वे घोषाः' 'नामानि सर्वाणि यमाविशन्ति' 'इन्द्रं मित्रं वरुणम् अग्निमाहुः' 'स सर्वनामा स च सर्वकर्ता' इत्यादिश्रुतिस्मृतयो द्रष्टव्याः ।

सर्वकर्माणां समर्पणं हरौ इति गीतातात्पर्यम् ।

"वैष्णवान्येव कर्माणि यः करोति सदा [2]नरः ।
जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ।
स तत्कर्मेति विज्ञेयो [3]ह्यन्यदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ।।" इति ।३२।

## २. प्रकाशिका

सूर्यादीज्यारूपसन्ध्यावन्दनादिषु कथमनिज्यमानस्य विष्णोः स्मरणस्योपयोग इत्यत्राह - *सर्ववर्णाश्रमैरिति* । सन्ध्यादिकर्मकालेऽपि । यथा चैतत्तथोक्तं प्राक् ।

ननु रमादीनां यजनस्य तत्र तत्रोक्तत्वात् कथं विष्णुरेक एवेज्यत इत्युच्यत इत्यत्राह - *रमाब्रह्मादय इति* । इज्यन्त इति शेषः । विष्णुः मुख्यतः सर्वोत्कृष्टत्वेन इज्यते । रमादयस्तु तत्परिवारतयैव न तु मुख्यत इति भावः । रमादिष्वपि विष्णोरेव इज्यत्वम् । अत एव लक्ष्म्यादिमन्त्रानुदाहृत्य तन्त्रसारे अभिहितम् - 'मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः' इति । ३२ ।

## ३. तन्त्रदीपिका

तर्हि वर्णभेदेन देवतान्तराणामारा[4]धनं (किं) नेत्यत्राह - *सर्वेति* ।

---

१. पञ्चनदविशेषः ख. २. वरः क. परः ग.

३. ह्यन्यथा वादिपूजनम् ख. ४. धनं नेत्याह - *सर्वेति* ।

तर्हि. [1]देवतान्तराणामनाराध्यतेत्यत आह - रमाब्रह्मादय इति । पूज्या इति शेषः । ३२ ।

*सदाचारस्मृतिः*

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद् यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ।। ३३ ।।

*१. आह्निककौस्तुभः*

विष्णोः परिवारा इत्युक्तार्थे हरिस्मरणपूर्वकं कर्म कार्यमित्यर्थे चैकां श्रुतिमाह - *कविमिति* । कविं सर्वज्ञम् । तस्य सर्वान्तस्थत्वं विनाऽऽयोगात् आह - *पुराणमिति* । [2]पुराण्यणति प्रेरकतया तिष्ठति तथा तम् । अनुशासितारं सर्वेष्टोपदेशकम् । अणोरणीयांसमत्यन्तसूक्ष्मम् । सर्वस्य - रमादिप्रपञ्चस्य धारणपोषणकर्तारम्, सूक्ष्मादप्यतिसूक्ष्मत्वादेव अज्ञेयस्वरूपम् । अर्काणां प्रकाश इव प्रकाशो यस्य सः तममितप्रभम् । एतादृशगुणकं योऽधिकारी अनुस्मरेद् स तमसः [3]तमोनाम्न्याः प्रकृतेः बन्धात् परस्तात् दूरे भवति । मुक्तो जायत इत्यर्थः । तमसः अज्ञानात् मृत्योः प्रकृतेर्वा परस्तात् गतं एतद्बाधारहितं विष्णुं यः सदा कर्मकरणसमयेषु स्मरेत् सः, विष्णुभक्तः तमाप्नोतीति पूर्वेण वा सम्बन्धः । अत्र ये येन पोषणीयाः शस्याश्च ते तत्परिवारा इति [4]सामान्यव्याप्त्या रमादीनां भगवत्परिवारत्वं सिद्ध्यतीति बोध्यम् ।। ३३ ।।

*२. प्रकाशिका*

रमाब्रह्मादयः विष्णोः परिवारा इत्यत्र श्रुतिं प्रमाणयति - *कविम् इति* । कविं सर्वज्ञम् । 'कविः सर्ववेदनात्' इति वचनात् । पुराणं पुराऽपि नवम् । पृषोदरादित्वात् साधु । अनुशासितारं शिक्षकम् । अणोरणीयांसं सर्वस्य धातारं धारणपोषणकर्तारम् । [5]वाङ्मनसोरगोचरस्वरूपं, सूर्यसदृशप्रभम् । देहित्वेऽनित्यत्वप्रसङ्ग इत्यत उक्तं - *तमसः परस्तादिति* । तमसः अव्यक्तात्

---

१. देवतान्तरणामानान्तरमेवेत्यत  २. परण्यति ख.  ३. तरोर्नाम्न्याः ग.
४. साम्यव्याप्त्या ग.  ५. वाङ्मनसस्वरूपम् ख.

परतः स्थितम् । 'अव्यक्तं वै तमः परस्ताद्धि सन्ततम्' इति श्रुतेः । अप्राकृतविग्रहमित्यर्थः ।

यद्वा मृत्युस्तमः । 'मृत्युर्वै [1]तमो ज्योतिरमृतम्' इति श्रुतेः । मृत्युमद्देहरहितमित्यर्थः। अत्र यो यस्योत्पादकः स तत उत्तम इति [2]सूंचितया व्याप्त्या रमादिभ्य उत्तमं विष्णुं प्रति रमादेः परिवारत्वं सिद्धं भवति । उक्तं च-

ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ।
सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ।।
निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः ।
स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ।।

इति । ३३ ।

*३. तन्त्रदीपिका*

उक्तार्थे पुनः प्रमाणं पठति - *कविमिति* । बहुप्रमाणपठनं तु दाढ्र्यायेति ज्ञातव्यम् । योऽन्त काले 'कवि पुराणम्' इत्याद्युक्तगुणविशिष्टं [3]अनुस्मरेत् स मुक्तो भवतीत्यर्थः । ३३ ।

*सदाचारस्मृतिः*

*( विष्णोस्सर्वोत्तमत्त्वे प्रमाणोदाहरणम् )*

वेदाहमेतं पुरुषं महान्तम्
आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरो
नामानि कृत्वा अभिवदन् यदास्ते ।। ३४ ।।

धाता पुरस्ताद् यमुदाजहार
शक्रः प्रविद्वान् [4]प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ।। ३५ ।।

१. शमो ख.    २. सूंचिव्याप्या ख.
३. अनुस्मरन् ख.    ४. प्रदिशश्चतस्रो ख.

### १. *आह्निककौस्तुभः*

'परिवारतया' इत्यनेन अर्थादुक्ते सर्वोत्तमत्वे तैत्तिरीयश्रुतिं प्रमाणतयोदाहरति - *वेदाहमिति* । अत्र पूर्वं स्वेन पुरुषसूक्तोक्तमाहात्म्यसत्यत्वे स्वयं प्रत्यक्षं प्रमाणमाह वेदपुरुषः - *वेदाहमिति* । यः धीरः, नारायणः उक्तरीत्या सर्वाणि [1]ब्रह्माण्डादिचेतनाचेतनवस्तूनि विचित्य निर्माय तेषां रूपाणि शुक्लादिरूपाणि नामानि ब्रह्मादिनामधेयानि च कृत्वा अभिवदन् तन्नामोच्चारणादिरूपाभिलपनादानादिव्यवहारं कुर्वन् आस्ते वर्तते । तमेवं महान्तं [2]मुक्तामुक्तेशत्वादिमाहात्म्योपेतं तमसः प्रकृतेः पारे तु एव परस्तादेव वर्तमानं तद्बाधारहितम् आदित्यवर्णम् [3]अमितभानुप्रभं पुरुषं नारायणमहं वेद । अपरोक्षतो जानामि । अन्येऽप्येतादृशं रूपं दृष्ट्वा उपदिशन्तीत्याह - *धातेति*। धाता हिरण्यगर्भः पुरस्तात् पूर्वं आदिकाले यं पुरुषम् उत् उत्कृष्टत्वेन आजहार स्वयं सम्यक् दृष्ट्वा व्याजहार उपदिदेश । तथा प्रदिशः - प्रकर्षेणोपदेशकाः चतस्रः - अनिरुद्धादिचतुर्मूर्तीः प्रविद्वान् प्रकर्षेण वेत्ता शक्रः देवेन्द्रोऽपि पुरुषं प्रकृष्टत्वेन व्याजहार तमहं वेदेति सम्बन्धः । उक्तमूर्तिध्यानफलमाह - *तमेवमिति*। तं - पुरुषम्, एवं - उत्तमत्वादिमहिमविशिष्टं विद्वान् श्रवणमननध्यानपूर्वकं [4]यः अपरोक्षतो जानाति, इह संसारे स्थितः पुमान् ज्ञानसम्पत्युत्तरकालीनप्रसादद्वारा मुक्तो भवति । नान्यः - ज्ञानादन्यः पन्थाः - कर्मादि अयनाय - मोक्षाय न विद्यते - नास्त्येवेत्यर्थः । अत्र प्रमाणविचारस्तम्भः । ३४, ३५ ।

### २. *प्रकाशिका*

विष्णोः सर्वोत्तमत्वे तैत्तिरीयश्रुतिमुदाहरति - *वेदाहमिति* । अहं - मन्त्रद्रष्टा ऋषिः । प्रकृतेः परं दिव्यरूपम् एनं महान्तं पुरुषं वेद इति यत् यो धीरः सर्वाणि ब्रह्मादिस्वरूपाणि विचिन्त्य - [5]विरत्नार्य तेषां नामानि च दत्वा तैर्नामभिर्व्यवहरन् आस्ते ।

धाता हिरण्यगर्भः सर्वापेक्षया पूर्वत्वेन यमुदाहृतवान् ज्ञानी शक्रोऽपि सर्वा दिशः प्रति [6]यमाघोषयत् तं परं परमात्मानम् एवं सहस्रशीर्षत्वादीनां विद्वान्, इह - लोके अमृतो - मुक्तो भवति । ज्ञानातिरिक्तो अन्यो मार्गः

---

१. ब्राह्मणादि क. २. मुक्ताकेशत्वादि ख. ३. अमितभासम् ख.
४. या परोक्षतो जानीते ग. ५. विस्तृत्य क. ६. यमो यमाघोपत् क.

विष्णुप्रसादाय न विद्यते । ३४, ३५ ।

### ३. *तन्त्रदीपिका*

उपासनात् अधिकारिणः कस्य फलं जातम् इत्यतः चतुर्मुखस्यैवेति श्रुतिमुदाहरति - *वेदाहमिति* । तर्हि देवतान्तराणामपि क्वचिन्माहात्म्यश्रवणात् को विशेष इत्यतः [1] इतरनिषेधपूर्वकं भगवद्ज्ञानस्य मोक्षहेतुत्वं श्रुत्या दर्शयति - *तमेवं विद्वान्* इति । ३४, ३५ ।

### *सदाचारस्मृतिः*

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ।। ३६ ।।

### १. *आह्निककौस्तुभः*

इदानीं 'द्वाविमौ पुरुषौ' इत्यादीनां 'कविं पुराणम्' इत्यादीनां च प्रमाणवाक्यतां सूचयन् स्वकृतग्रन्थस्य नाम आदधानः उपसंहरति - *आनन्दतीर्थेति*। आनन्दरूपस्य हरेः तीर्थं शास्त्रं [2]निर्मिततया यस्यास्ति स आनन्दतीर्थः, स चासौ मुनिश्च तेन मध्वमुनिना सदा क्रियमाणस्य आचारस्य विषये गीतादिरूपव्यासवाक्यानां समुद्धृतिः, उपलक्षणमेतत्, वेदवाक्यसमुद्धृतिश्च सङ्क्षेपतः - सङ्कोचतः कृता इत्यनेन अस्य ग्रन्थस्य सदाचारस्मृतिरितिनाम कृतं भवति। [3]सतामैहिकामुष्मिकश्रेयोहेतुः आचारः सदाचारः । तद्विधायकग्रन्थः स्मृतिरिति सदाचारस्मृतिशब्दार्थो द्रष्टव्यः । [4]द्रष्टृकर्तृप्रसिद्धिको ग्रन्थः स्मृतिरिति पूर्वमीमांसोक्तेः ।

ननु पुरातनानां सदाचारविधायकानां स्मृतीनां सत्वात् किमनया उद्धृत्या इत्यतः प्रयोजनमाह - *शुभेति* । [5]समस्ताभिलषितार्थानभिधानात् अन्याः स्मृतीः सतीरप्यसतीरिव मन्वानेन [6]विष्णुस्मरणाद्यभिलषितप्रतिपादनपटुत्वात् शुभा समुद्धृतिः कृतेति भावः । ३६ ।

---

१. इतरेण पूर्वका ख.
२. निर्मिता ग.
३. सतामैहिक[illegible] ख.
४. द्रष्टः कर्तृप्रसिद्धः ख.
५. समस्ताभिलांषितार्थाभिधानाद कं.
६. विष्णु[illegible]भिलषितार्थपटुत्वात् ख.

### २. *प्रकाशिका*

मन्दानुग्रहाय वेदव्यासकृतत्वमस्य शास्त्रस्य दर्शयति - *आनन्दतीर्थेति* । ३६ ।

### ३. *तन्त्रदीपिका*

एतेषां स्वकपोलकल्पितत्वशङ्कां निवारयति - *आनन्दतीर्थेति*। सदाचारप्रतिपादकवेदव्यासवाक्यसङ्ग्रहरूपत्वेन नाश्रद्धेयत्वमित्यर्थः । ३६ ।

### *सदाचारस्मृतिः*

अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ।। ३७ ।।

### १. *आह्निककौस्तुभः*

अथ पूरितमनोरथो निरस्ताविद्याततिराचार्यतरणिरन्ते शिष्यशिक्षायै अनुष्ठितं स्तुतिरूपं मङ्गलं अन्ते निवध्नाति - *अशेषेति* । निखिलमङ्गलगुणानां नित्यानुभव एव [1]सती तनुर्यस्य स तथा । तत एवाशेषैः पारतन्त्र्यादिभिर्दोषैः रहितः । पुरुषेभ्यो रमाविरिञ्च्यादिभ्य उत्तमः हरिः प्रीयतां प्रसन्नो भवत्विति सकलमतिमङ्गलम् ।

यो लीलया सन्तनुते हि विश्वं
  तत्पालयत्यात्मनि विष्णुनामा ।
लयं नयत्याशु च [2]पूर्णकर्ता
  शिवं तनोत्वाशु हरिर्ममासौ ।। १ ।।
अभिधातुं न शक्यन्ते आनन्त्यात् सर्वशः क्रियाः ।
वालव्युत्पत्तयेऽस्माभिः सङ्क्षिप्योक्ता यथामति ।। २ ।।
प्रतारकैरादृतमत्र किञ्चित्
  मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तिताऽतो न हि तेन
काचित् खपुष्पहीनाऽ[3]प्यपचितिर्न हीयते ।। ३ ।।

---

१. सती यस्य ग.  २. पूर्णकर्मा ख.
३. अपचितिः पूजा । 'पूजा नमस्यापचितिः सपर्या र्चाहरणासमाः' इत्यमरोक्तेः ।

श्रीमदाचार्यवाक्स्तोममिश्रितास्तु मदुक्तयः ।
रथ्योदानीव गङ्गोदे भूयासुर्भूसुरादृताः ।। ४ ।।
विचार्य शुद्धं कुरुत व्यत्यस्तं त्वत्र यद् भवेत् ।
अशुद्धमथवान्यच्च सन्तो मयि दयापराः ।। ५ ।।
प्रीतोऽसि मापते व्यास यदि केनाऽपि कर्मणा ।
कुरु मां मध्वशास्त्रस्य सदाऽऽवृत्तिरतं हरे ।। ६ ।।
वेदव्यासस्य सत्कण्ठे गुर्वाराध्यपदः सदा ।
भासतां रत्नमालाभस्त्वयमाह्निककौस्तुभः ।। ७ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
सदाचारस्मृतिग्रन्थस्य विवरणे
श्रीमद्यादवाचार्यपूज्यपादशिष्येण श्रीनिवासेन
विरचिते आह्निककौस्तुभे ब्राह्मणकृत्यजातं समाप्तम् ।

। श्री मध्वेशार्पणमस्तु ।

## २. *प्रकाशिका*

शिष्यशिक्षार्थं ग्रन्थसमाप्तावपि मङ्गलमाचरति - *अशेषेति* । अपरिच्छिन्नसद्गुणानन्दसदाबोध एव तनुर्यस्य सः । अपकर्षापादकदोषात्यन्ताभाववान्, पुरुषोत्तमः प्रीयताम् इत्यशेषमतिमङ्गलम् ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितायाः
सदाचारस्मृतेः टीका भावप्रकाशिकाधर्माचार्य
सूनुनृसिंहेन विरचिता समाप्ता ।

## ३. *तन्त्रदीपिका*

एवं कृतसकलसमर्पणरूपं मङ्गलं ग्रन्थान्ते करोति - *अशेषेति* । अशेषदोषरहित इत्यादौ विशेषास्त्वार्यकृतसङ्ग्रहादौ स्पष्टत्वात् नेह विस्तरभिया लिख्यन्ते । अनन्तगुणपरिपूर्णः सकलदोषरहितः पुरुषोत्तमः एवं कृतेन प्रीयतामिति तत्समर्पणम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।
इति प्रमाणमभिप्रेत्य प्रीयतां पुरुषोत्तम इत्युक्तम् ।

सदाचारस्मृतिव्याख्या नामतस्तन्त्रदीपिका ।
वेदव्यासेन रचिता मुद्गलाचार्यसूनुना ।।

व्याख्यानमेतन्ममयत्करेप भागेन चन्द्रार्धपरार्धवृद्धिः ।
तद्वत्तथाप्यास्तिकताणुमात्रमालक्ष्य सन्तः परिमोदयन्तु ।।

इति श्रीमुद्गलतीर्थाचार्यसुतश्रीहरिदासाचार्य शिष्येण मुद्गलवेदव्यासेन विरचिता तन्त्रदीपिका समाप्ता ।

। श्री मध्वेशार्पणमस्तु ।

ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದಾಚಾರ್ಯರು ರಚಿಸಿದ

# ಸದಾಚಾರಸ್ಮೃತಿ

ಅಪೂರ್ವವಾದ ಅಪ್ರಕಟಿತ ವ್ಯಾಖ್ಯಾನಗಳ ವಿಶೇಷಾಂಶಗಳಿಂದ
ಕೂಡಿದ ಅನುವಾದ ಸಹಿತ

ಅನುವಾದಕರು
ವಿದ್ವಾನ್ ಎ. ವಿ. ನಾಗಸಂಪಿಗೆ ಎಂ.ಎ.
ನ್ಯಾಯ-ವೇದಾಂತ ವಿದ್ವಾನ್
ಸಂಶೋಧಕರು
ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಾಲಯ
ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾನಿಲಯ, ಮೈಸೂರು

# ವಿಷಯಾನುಕ್ರಮಣಿಕಾ

ಕನ್ನಡಾನುವಾದ)

## ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದಾಚಾರ್ಯರು ರಚಿಸಿದ

# ಸದಾಚಾರಸ್ಮೃತಿ

।। ಹರಿಃ ಓಂ ।।

ಯಸ್ಮಿನ್ ಸರ್ವಾಣಿ ಕರ್ಮಾಣಿ ಸನ್ನ್ಯಸ್ಯಾಧ್ಯಾತ್ಮಚೇತಸಾ ।
ನಿರಾಶೀರ್ನಿರ್ಮಮೋ ಯಾತಿ ಪರಂ ಜಯತಿ ಸೋಽಚ್ಯುತಃ ।। ೧ ।।

ಸಜ್ಜನ ಸಮುದಾಯವು ತನ್ನ ಶರೀರದಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವ ಸರ್ವೋತ್ತಮನಾದ ಶ್ರೀಹರಿಯಲ್ಲಿ ಬಗೆಯನ್ನು ನೆಲೆಗೊಳಿಸಿ ನಿಷಿದ್ಧಕಾಮನೆಗಳನ್ನು ತೊರೆದು ಸಕಲವಿಧಕರ್ಮಗಳನ್ನು ಶ್ರೀಹರಿ ಪೂಜಾ ರೂಪವಾಗಿ ನಡೆಸಿ, ಅರ್ಪಿಸಿ ಶುದ್ಧವಾದ ಜ್ಞಾನದ ಮೂಲಕ ಯಾವ ಪರಮಾತ್ಮನನ್ನು ಪಡೆಯಬಲ್ಲದೋ ಅಂತಹ ಭಗವಂತನು ಸರ್ವೋತ್ಕೃಷ್ಟನಾಗಿದ್ದಾನೆ

ವಿವರಣೆ - ಮನಸ್ಸಿನ ನೈರ್ಮಲ್ಯವು ಸದಾಚಾರ ಮತ್ತು ಸದ್ವಿಚಾರಗಳಿಂದ ಮಾತ್ರವೇ ಉಂಟಾಗುವುದರಿಂದ ಮನಃಶುದ್ಧಿ ಮತ್ತು ಶ್ರೀಹರಿ ಪ್ರಸಾದಕ್ಕೆ ಕಾರಣವಾದ ಸದಾಚಾರ ಪದ್ಧತಿಯನ್ನು ನಿರೂಪಿಸಲು ವ್ಯಾಸರ ವಾಕ್ಯಗಳ ಸಾರ ಸಂಗ್ರಹ ರೂಪವಾದ ಈ 'ಸದಾಚಾರ ಸ್ಮೃತಿ' ಎಂಬ ಗ್ರಂಥವನ್ನು ಶ್ರೀಮದಾಚಾರ್ಯರು ರಚಿಸಿದ್ದಾರೆ.

ಸರ್ವಕರ್ಮ ಸಮರ್ಪಣೆ .

'ಯಸ್ಮಿನ್ ಸರ್ವಾಣಿ ಕರ್ಮಾಣಿ ಸನ್ನ್ಯಸ್ಯ' ಎಂಬುದಾಗಿ ಆಚಾರ್ಯರು ಪುಣ್ಯ ಪಾಪಗಳ ಸಮರ್ಪಣೆಯನ್ನು ನಿರೂಪಿಸಿದ್ದಾರೆ. ಅಶುಭಸ್ವೀಕಾರವಿಲ್ಲದ, ಕೊಟ್ಟದ್ದನ್ನು ಅನಂತಮಾಡಿ ಕೊಡುವ ಶ್ರೀಹರಿಗೆ ಪಾಪಕರ್ಮವನ್ನು ಸಮರ್ಪಿಸಬಹುದೆ ? ಅಶುಭಕರ್ಮ ಸಮರ್ಪಣೆಯಿಂದ ಸಾಧಕನಿಗೆ ಹಾನಿಯಾಗಲಾರದೆ ?

ಈ ಬಗ್ಗೆ ಮೌದ್ಗಲಾಚಾರ್ಯರ ವ್ಯಾಖ್ಯೆ ಹೀಗೆ ಬೆಳಕು ನೀಡಿದೆ - ಪುಣ್ಯ ಪಾಪಗಳೆರಡನ್ನೂ ಬಿಂಬರೂಪನಾಗಿ ಶ್ರೀಹರಿಯೇ ಮಾಡಿಸುವವನಾದುದರಿಂದ ಸರ್ವಕರ್ಮ ಸಮರ್ಪಣೆ ಸೂಕ್ತವೇ ಆಗಿದೆ. ಆದರೆ ಪುಣ್ಯಕರ್ಮ ಸಮರ್ಪಣೆಯಲ್ಲಿ ಅನುಸಂಧಾನ ಹೀಗಿರಬೇಕು -

ಹತ್ತಾರು ಜನ ಸೇರಿ ರಥವನ್ನು ಎಳೆಯುವಂತೆ ಜೀವನಿಂದ ನಡೆಸಲ್ಪಡುವ ಪುಣ್ಯ ಕರ್ಮ ಸಂತತಿಗಳಲ್ಲಿ ದೇವತೆಗಳ ಮತ್ತು ಶ್ರೀಹರಿಯ ವ್ಯಾಪಾರ ಅಪಾರವಾಗಿದೆ.

ನಮಗೆ ಪ್ರೇರಕರೂ ತತ್ತ್ವಾಭಿಮಾನಿಗಳೂ ಆದ ದೇವತೆಗಳ ಮತ್ತು ಹರಿಯ ಅನುಗ್ರಹ - ಪ್ರಯತ್ನಗಳಿಲ್ಲದೆಯೇ ಜೀವನು ಯಾವ ಕಾರ್ಯವನ್ನೂ ಮಾಡಲಾರ. ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಪುಣ್ಯಕರ್ಮವನ್ನು ಮಾಡಿದ ಮೇಲೆ ಕೇವಲ ತನ್ನ ಕರ್ತೃತ್ವವನ್ನು ಮಾತ್ರವೇ ಚಿಂತಿಸದೇ ದೇವತೆಗಳ ಮತ್ತು ಅವರಿಗೂ ಪ್ರೇರಕನಾದ ಶ್ರೀಹರಿಯ ಮುಖ್ಯಕರ್ತೃತ್ವದ ಎಚ್ಚರ ಹಾಗೂ ಕೃತಜ್ಞತಾಭಾವದೊಂದಿಗೆ ಪುಣ್ಯಕರ್ಮಗಳನ್ನು ಶ್ರೀಹರಿಯಲ್ಲಿ ಸಮರ್ಪಿಸಬೇಕು. ಇದರಿಂದ ಅನಂತಫಲ ದೊರಕುತ್ತದೆ. ಶ್ರೀಹರಿ ಮತ್ತು ದೇವತೆಗಳ ಕರ್ತೃತ್ವದ ಅನುಸಂಧಾನ ಹಾಗೂ ಕೃತಜ್ಞತಾಭಾವದಿಂದ ಸಮರ್ಪಣೆ ಮಾಡದಿರುವಲ್ಲಿ ಮಹಾಫಲದಿಂದ ಜೀವರು ವಂಚಿತರಾಗಿ ಅತ್ಯಲ್ಪ ಫಲ ಹೊಂದುವರು. ಪುಣ್ಯಕರ್ಮ ಸಮರ್ಪಣೆಯಲ್ಲಿ ಈ ಅನುಸಂಧಾನ ಜಾಗೃತವಾಗಿರಬೇಕು.

ಪಾಪಕರ್ಮಗಳ ಸಮರ್ಪಣೆ ಮಾಡುವಾಗ ಅದನ್ನು ಶ್ರೀಹರಿಯೇ ಕರ್ಮಾನುಸಾರವಾಗಿ ಮಾಡಿಸಿದ್ದಾನೆ ಎಂಬ ತಿಳಿವಿನೊಂದಿಗೆ ತಾನು ಮಾಡಿದ ತಪ್ಪನ್ನು ಪ್ರಾಮಾಣಿಕತೆಯಿಂದ ಒಪ್ಪಿಕೊಳ್ಳುವ ನಮ್ರತೆ ಇರಬೇಕು. ತಪ್ಪು ಮಾಡಿದ ವ್ಯಕ್ತಿಗೆ ರಾಜನು ಶಿಕ್ಷೆ ನೀಡುವನಾದರೂ, ತಪ್ಪನ್ನು ಒಪ್ಪಿಕೊಂಡು ನಮ್ರತೆಯಿಂದ ನಿವೇದಿಸುವ ವ್ಯಕ್ತಿಯ ಬಗ್ಗೆ ಶಿಕ್ಷೆಯ ಪ್ರಮಾಣವನ್ನು ಕಡಿಮೆಗೊಳಿಸದೆಯೇ ಕ್ಷಮಾ ಧೋರಣೆಯನ್ನು ತಾಳುವಂತೆ, ತಪ್ಪನ್ನು ಒಪ್ಪಿಕೊಳ್ಳುವ ನಮ್ರ ಭಕ್ತನ ಬಗೆಗೂ ಶ್ರೀಹರಿ ಕರುಣೆ ತೋರುವನು. ಹರಿದ್ವೇಷಿಗಳಿಗೆ ಈ ಪಾಪಫಲ ಹೋಗಲಿ ಮತ್ತು ನನ್ನಿಂದ ಪುನಃ ಇಂತಹ ಪಾತಕಗಳನ್ನು ಮಾಡಿಸಬೇಡವೆಂದು ವಿನಮ್ರ ಪ್ರಾರ್ಥನೆಯೊಂದಿಗೆ ಶ್ರೀಹರಿಯಲ್ಲಿ ಪಾಪಕರ್ಮಗಳನ್ನು ಅರ್ಪಿಸಬೇಕು. ಸಕಲ ಪಾಪಗಳನ್ನು ಶ್ರೀಹರಿಗೆ ಸಮರ್ಪಿಸಿದರೆ ಅದನ್ನು ದೈತ್ಯರಿಗೆ ವಿತರಿಸಿ ನಮ್ಮನ್ನು ಪುನೀತರನ್ನಾಗಿಸುತ್ತಾನೆ.

ಪುಣ್ಯವನ್ನು ಶ್ರೀಹರಿಗೆ ಸಮರ್ಪಿಸದಿರುವಲ್ಲಿ, ಒಡೆಯ ಅಥವಾ ರಕ್ಷಕನಿಲ್ಲದ ಮರಗಳಲ್ಲಿರುವ ಹಣ್ಣುಗಳನ್ನು ಸ್ವಚ್ಛಂದವಾಗಿ ಪುಂಡಪೋಕರಿಗಳು ಕದ್ದೊಯ್ಯುವಂತೆ ನಮ್ಮ ಪುಣ್ಯವನ್ನು ದೈತ್ಯರು ಕದ್ದೊಯ್ಯುವರು. ಶ್ರೀಹರಿಗೆ ಅರ್ಪಿಸಿದರೆ ಅವನು ಪುಣ್ಯವನ್ನು ರಕ್ಷಿಸಿ ಅನಂತಫಲವನ್ನು ಕರುಣಿಸುವನು. ಪಾಪಕರ್ಮಗಳನ್ನು ಸಮರ್ಪಿಸಿದಾಗ ಆ ಫಲವನ್ನು ದೈತ್ಯರಿಗೆ ನೀಡಿ ನಮ್ಮನ್ನು ಶುದ್ಧರನ್ನಾಗಿಸುತ್ತಾನೆ. ಆದ್ದರಿಂದ ಸಕಲ ಕರ್ಮಗಳನ್ನು ಶ್ರೀಹರಿಗೆ ಸಮರ್ಪಿಸಬೇಕು. ।। ೧ ।।

**ಸ್ಮೃತ್ವಾ ವಿಷ್ಣುಂ ಸಮುತ್ಥಾಯ ಕೃತಶೌಚೋ ಯಥಾವಿಧಿ ।**
**ಧೌತದಂತಃ ಸಮಾಚಮ್ಯ ಸ್ನಾನಂ ಕುರ್ಯಾದ್ವಿಧಾನತಃ ।। ೨ ।।**

ಬ್ರಾಹ್ಮ ಮುಹೂರ್ತದಲ್ಲಿ ಏಳುವಾಗ ಮತ್ತು ಎಚ್ಚೆತ್ತು ಕುಳಿತು ಪರಮಾತ್ಮನನ್ನು ಸ್ಮರಿಸಿ ಅನಂತರ ಮಲಮೂತ್ರ ವಿಸರ್ಜನೆ ಮಾಡಿ ಶಾಸ್ತ್ರೋಕ್ತವಿಧಿಯಿಂದ ಮೃತ್ತಿಕಾ ಶೌಚವನ್ನು ಮುಗಿಸಿ ಹಲ್ಲುಜ್ಜಿಕೊಂಡು ಆಚಮನ ಮಾಡಿ ಸ್ನಾನ ಮಾಡಬೇಕು.

ವಿವರಣೆ - ಬೆಳಗಿನ ಜಾವ ಎದ್ದನಂತರ ರಾತ್ರಿ ಮಲಗುವವರೆಗೆ ಮಾಡಬೇಕಾದ ಅವಶ್ಯಕರ್ತವ್ಯಗಳ ನಿರೂಪಣೆಯ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರು ಇಲ್ಲಿ ಬ್ರಾಹ್ಮಮುಹೂರ್ತದಲ್ಲಿ ಮಾಡಬೇಕಾದ ಕಾರ್ಯವನ್ನು ವಿವರಿಸಿದ್ದಾರೆ.

ಬ್ರಾಹ್ಮ ಮುಹೂರ್ತ

'ರಜನೀ ಪ್ರಾಂತಯಾಮಾರ್ಧಂ ಬ್ರಾಹ್ಮಃ ಸಮಯ ಉಚ್ಯತೇ' ಎಂಬ ಸ್ಕಾಂದ ಪುರಾಣ ವಚನಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಸೂರ್ಯೋದಯಕ್ಕಿಂತ ಮೊದಲಿನ ಎರಡು ತಾಸುಗಳ ಕಾಲವನ್ನು 'ಬ್ರಾಹ್ಮಮುಹೂರ್ತ' ಎನ್ನುತ್ತಾರೆ. ಅಥವಾ ಇದನ್ನು ಉಷಃ ಕಾಲವೆಂದೂ ವ್ಯವಹರಿಸುವುದಿದೆ. 'ಬ್ರಾಹ್ಮಮುಹೂರ್ತ ಇತ್ಯುಷಃಕಾಲಸ್ಯ ಪ್ರಸಿದ್ಧೇಃ' (ಛಾಂದೋಗ್ಯಭಾಷ್ಯ) ಸೂರ್ಯೋದಯ 6-30 ಘಂಟೆಗೆ ಆಗುವುದಾದರೆ, ಅದಕ್ಕಿಂತ ಮುಂಚಿನ ಎರಡು ತಾಸಿನ ಅವಧಿ, ಅಂದರೆ ಸುಮಾರು 4-30 ಘಂಟೆಯ ಅವದಿ, ಬ್ರಾಹ್ಮಮುಹೂರ್ತ ಎನಿಸುತ್ತದೆ.

ಹಾಸಿಗೆಯಿಂದ ಎದ್ದು ಪಠಿಸಬೇಕಾದ ಸ್ತೋತ್ರಗಳು

ಗಜೇಂದ್ರಮೋಕ್ಷ - ದಧಿವಾಮನಸ್ತೋತ್ರ - ರಮೇಶಸ್ತೋತ್ರ -ವ್ಯಾಸಕೃತ ಶ್ರೀನಾರಾಯಣ ಸ್ತೋತ್ರ ಇವುಗಳನ್ನು ಪಠಿಸಬೇಕು. ನಾರಾಯಣ ಸ್ತೋತ್ರದ ಪಾಠ ಮತ್ತು ಅರ್ಥ ಹೀಗಿದೆ -

ಪ್ರಾತರ್ಭಜಾಮಿ ಭವಭೀತಿಮಹಾರ್ತಿಶಾಂತ್ಯೈ
ನಾರಾಯಣಂ ಗರುಡವಾಹನಮಬ್ಜನಾಭಮ್ ।
ಗ್ರಾಹಾಭಿಭೂತವರವಾರಣಮುಕ್ತಿಹೇತುಂ
ಚಕ್ರಾಯುಧಂ ತರುಣವಾರಿಜಪತ್ರನೇತ್ರಮ್ ।।

"ಮೊಸಳೆಯ ಹಿಡಿತಕ್ಕೆ ಸಿಲುಕಿ ಬಸವಳಿದ ಗಜೇಂದ್ರನ ದುಃಖ ನಿವಾರಕನಾದ ಪದ್ಮನಾಭನೂ, ಗರುಡವಾಹನನೂ ಆದ ಕಮಲದಂತೆ ಕಂಗೊಳಿಸುವ ಕಂಗಳುಳ್ಳ ಚಕ್ರಾಯುಧಧಾರಿಯಾದ ಶ್ರೀಮನ್ನಾರಾಯಣನನ್ನು ಸಂಸಾರದ ಮಹಾಭಯ ನಿವಾರಣೆಗಾಗಿ ಬೆಳಗು ಜಾವದಲ್ಲಿ ನಮಿಸುತ್ತೇನೆ."

ಅನಂತರ ಬೆಳಗು ಜಾವದಿಂದ ರಾತ್ರಿ ಮಲಗುವವರೆಗಿನ ಸಕಲ ಕರ್ಮಗಳೂ ನಿನ್ನ ಪೂಜಾರೂಪವಾಗಿರಲಿ ಎಂದು ಶ್ರೀಹರಿಯನ್ನು ಪ್ರಾರ್ಥಿಸಿ ಅವನ ಅಂತರಂಗ ಭಕ್ತರಾದ ರಮಾ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳನ್ನು ಗುರುಪರಂಪರೆಯನ್ನು ನಮಿಸಬೇಕು. ಅನಂತರ ಸಾಧ್ಯವಾದಲ್ಲಿ ಶ್ರೀವಿಷ್ಣು ಸಹಸ್ರನಾಮವನ್ನು ಪಠಿಸಿ ತುಳಸಿ ಮತ್ತು ಹಸುವಿಗೆ ನಮಸ್ಕರಿಸಬೇಕು.

**ಮಂಗಳ ವಸ್ತುಗಳನ್ನು ನೋಡಬೇಕು**

ಬೆಳಿಗ್ಗೆ ಎದ್ದು ಮಂಗಳ ವಸ್ತುಗಳ ದರ್ಶನವನ್ನು ಮಾಡಬೇಕು. ಶ್ರೋತ್ರಿಯನಾದ ಬ್ರಾಹ್ಮಣ - ಪತಿವ್ರತೆ - ಹಸು - ವಿದ್ಯೋಪದೇಶಕನಾದ ಗುರು - ಅಗ್ನಿಹೋತ್ರ ಮಾಡುವ ಪವಿತ್ರ ವ್ಯಕ್ತಿ - ನದಿ - ಎತ್ತು -ಮೃದಂಗವೇ ಮೊದಲಾದ ವಾದ್ಯಗಳು - ಕನ್ನಡಿ - ಮಣಿ -ಉತ್ತಮನಾದ ಗುರು - ಗುಣಗಳಿಂದ ಹಿರಿಯನಾದ ಪೂಜ್ಯ - ಸೂರ್ಯ ಇವರನ್ನು ನೋಡುವ ವ್ಯಕ್ತಿ ಆಪತ್ತುಗಳಿಂದ ಬಿಡುಗಡೆ ಹೊಂದುವನು. ಪಾಪಿಷ್ಠ -ದುರಾಚಾರಿ - ಉನ್ಮತ್ತ - ನಗ್ನ - ಅಂಗವಿಕಲ ಮುಂತಾದವರನ್ನು ಬೆಳಗೆದ್ದು ನೋಡುವುದು ಅನಿಷ್ಟ ಸೂಚಕ.

**ಶೌಚವಿಧಿ**

ತಲೆಗೆ ವಸ್ತ್ರವನ್ನು ಸುತ್ತಿಕೊಂಡು ಮಲಮೂತ್ರವನ್ನು ವಿಸರ್ಜಿಸಬೇಕು. ಸೂರ್ಯ - ಅಗ್ನಿ - ಬ್ರಾಹ್ಮಣ - ಹಸು - ದೇವಸ್ಥಾನ ಮುಂತಾದವುಗಳ ಮುಂದೆ ಮಲ ಮೂತ್ರ ವಿಸರ್ಜಿಸಬಾರದು. ಅನಂತರ ದುರ್ಗಂಧ ಹೋಗುವ ತನಕ ಮಲಮೂತ್ರದ್ವಾರಗಳನ್ನು ಮತ್ತು ಎರಡು ಕೈಕಾಲುಗಳನ್ನು ಶುದ್ಧವಾದ ಮಣ್ಣು ಮತ್ತು ನೀರಿನಿಂದ ತೊಳೆದು ಕೊಳ್ಳಬೇಕು. ಮೃತ್ತಿಕಾ ಶೌಚಕ್ಕೆ ಸಂಬಂಧಿಸಿದಂತೆ ಸಂಖ್ಯಾನಿಯಮವನ್ನು ಸ್ಮೃತಿಕಾರರು ಹೇಳಿದ್ದಾರೆ. ಅದು ಸಂಪೂರ್ಣ ನಿರ್ಮಲತೆಗಾಗಿ ನಿರೂಪಿಸಲ್ಪಟ್ಟಿದೆ. ನಿರ್ಮಲತೆಯಿದ್ದಷ್ಟು ಫಲಾಧಿಕ್ಯ ಸಹಜ. ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಮನಃ ಸಮಾಧಾನವೆನಿಸುವ ತನಕ ಮತ್ತು ನಿರ್ಮಲತೆಯ ಅನುಭೂತಿಯವರೆಗೆ ಮಣ್ಣು ನೀರಿನಿಂದ ಶುಚಿತ್ವವನ್ನು ಸಂಪಾದಿಸಿಕೊಳ್ಳಬೇಕು. 'ಯಾವತ್ತು ಶುದ್ಧಿಂ ಮನ್ಯೇತ ತಾವಚ್ಛೌಚಂ ವಿಧೀಯತೇ' ಆದರೂ ಸ್ಥೂಲವಾಗಿ ಧರ್ಮಶಾಸ್ತ್ರದ ಅಭಿಪ್ರಾಯವನ್ನು ಹೀಗೆ ನಿರೂಪಿಸಬಹುದು - ಮಲವಿಸರ್ಜನೆ ಮಾಡಿದ ಮೇಲೆ ಸ್ವಚ್ಛವಾದ ಮಣ್ಣು ಹಾಗೂ ನೀರಿನಿಂದ ಐದು ಬಾರಿ ಮಲದ್ವಾರವನ್ನು ಒಮ್ಮೆ ಮೂತ್ರದ್ವಾರವನ್ನು ಹತ್ತು ಸಲ ಎಡಗೈಯನ್ನು ಏಳುಬಾರಿ ಎರಡೂ ಕೈಗಳನ್ನೂ ಮೂರು ಬಾರಿ ಪಾದಗಳನ್ನು ತೊಳೆದುಕೊಳ್ಳಬೇಕು. ದುರ್ಗಂಧ ನಿವಾರಣೆಯಾಗುವವರೆಗೆ ಅಂಗಾಂಗಗಳನ್ನು ತೊಳೆದುಕೊಂಡು ನಿರ್ಮಲವಾಗಿರಿಸಿಕೊಳ್ಳಬೇಕು.

ಗಂಡೂಷವಿಧಿ

ಗಂಡೂಷವೆಂದರೆ ಬಾಯಿ ಮುಕ್ಕಳಿಸುವುದು. ಮೂತ್ರ ವಿಸರ್ಜಿಸಿದಾಗ ನಾಲ್ಕು ಬಾರಿ ಹಾಗೂ ಮಲ ವಿಸರ್ಜಿಸಿದಾಗ ಹದಿನೆಂಟು ಬಾರಿ, ಭೋಜನೋತ್ತರದಲ್ಲಿ ಹದಿನಾರು ಬಾರಿ ಗಂಡೂಷವನ್ನು ಮಾಡಬೇಕು. ಎದುರು ದೇವತೆಗಳು, ಬಲಭಾಗದಲ್ಲಿ ಪಿತೃಗಳೂ ಇರುವ ಕಾರಣ ನಮ್ಮ ಎಡಭಾಗದಲ್ಲಿ ಬಾಯಲ್ಲಿನ ನೀರನ್ನು ಉಗುಳಬೇಕು.

ದಂತಧಾವನ

ಬೇವಿನ ಕಡ್ಡಿ, ಮಾವಿನ ಕಡ್ಡಿ, ಎಲೆ ಮುಂತಾದವುಗಳಿಂದ ಹಲ್ಲು ನಾಲಿಗೆಗಳನ್ನು ಚೆನ್ನಾಗಿ ತಿಕ್ಕಿ ಸ್ವಚ್ಛವಾಗಿರಿಸಿಕೊಳ್ಳಬೇಕು.

ಆಚಮನವಿಧಿ

ಅನಂತರ ಪೂರ್ವಾಭಿಮುಖವಾಗಿ ಕುಳಿತು ಅನಾಮಿಕಾಂಗುಲಿಯಲ್ಲಿ (ಕಿರುಬೆರಳಿನ ಹಿಂದಿನ ಬೆರಳಲ್ಲಿ) ಪವಿತ್ರ ಅಥವಾ ಪವಿತ್ರದುಂಗುರ ಧರಿಸಿ ಉದ್ದು ಕಾಳು ಮುಳುಗುವ ಪ್ರಮಾಣದ ನೀರನ್ನು ಹರಿಸ್ಮರಣಪೂರ್ವಕವಾಗಿ ಸ್ವೀಕರಿಸಬೇಕು. ಇದನ್ನು ಆಚಮನವೆನ್ನುತ್ತಾರೆ. ಅನಂತರ ಭಗವಂತನ ನಾಮಸ್ಮರಣೆ ಮಾಡುತ್ತಾ ಸಕಲ ತೀರ್ಥಾಭಿಮಾನಿ ವೇದಾಭಿಮಾನಿ ಮತ್ತು ಇಂದ್ರಾದಿ ದೇವತೆಗಳ ಸನ್ನಿಧಾನ ಪಾತ್ರವಾದ ಬಲಗಿವಿಯನ್ನು ಮುಟ್ಟಬೇಕು.

ಆಚಮನ ಮೂರು ಬಗೆಯಾಗಿದೆ

ಇಂತಹ ಆಚಮನವು ಶ್ರೌತ (ಮಾಂತ್ರ) ಸ್ಮಾರ್ತ, ವೈಷ್ಣವ ಎಂಬುದಾಗಿ ಮೂರು ತೆರನಾಗಿದೆ -

೧. ತತ್ಸವಿತುರ್ವರೇಣ್ಯಂ ..... ಪ್ರಚೋದಯಾತ್ ಎಂಬ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ ಆಚಮನ ಮಾಡಬೇಕು. ಅನಂತರ 'ಆಪೋ ಹಿಷ್ಠಾ' ಎಂಬ ಮಂತ್ರದ ಪದಗಳಿಂದ ಮತ್ತು ವ್ಯಾಹೃತಿಯಿಂದ ಶಾಸ್ತ್ರೋಕ್ತಕ್ರಮದಿಂದ ಇಪ್ಪತ್ನಾಲ್ಕು ಅಂಗಗಳಲ್ಲಿ ಕರನ್ಯಾಸ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಇದು ಸ್ಮಾರ್ತಾಚಮನವೆನಿಸಿದೆ.

೨. ಋಗ್ವೇದಾಯ ನಮಃ, ಯಜುರ್ವೇದಾಯ ನಮಃ, ಸಾಮವೇದಾಯ ನಮಃ ಎಂಬುದಾಗಿ ಆಚಮನ ಮಾಡಿ ಅಥರ್ವವೇದಾಯ ನಮಃ, ಅಗ್ನಯೇ ನಮಃ ಎಂದು ಮುಖವನ್ನು ತೊಳೆದುಕೊಂಡು ಶಾಸ್ತ್ರೋಕ್ತ ಕ್ರಮದಿಂದ ಮಂತ್ರದ ಜೊತೆ ಇತರಾಂಗಗಳಿಗೆ ಸಮ್ಮಾರ್ಜನ ಮಾಡಬೇಕು. ಇದು ಶ್ರೌತಾಪರಪರ್ಯಾಯವಾದ ಮಾಂತ್ರಾಚಮನವೆನಿಸಿದೆ.

೩. ಕೇಶವಾಯ ನಮಃ, ನಾರಾಯಣಾಯ ನಮಃ, ಮಾಧವಾಯ ನಮಃ ಎಂಬುದಾಗಿ ಆಚಮನ ಮಾಡಿ ಗೋವಿಂದಾದಿ ನಾಮೋಚ್ಚಾರಣೆಯೊಂದಿಗೆ ಶಾಸ್ತ್ರೋಕ್ತ ಕ್ರಮದಿಂದ ಅಂಗಸ್ಪರ್ಶ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಇದು ವೈಷ್ಣವಾಚಮನವೆನಿಸಿದೆ.

ಈ ಆಚಮನ ಪದ್ಧತಿಗಳಲ್ಲಿ ತತ್ರಪ್ರಸಿದ್ಧ (ನಾರಾಯಣನಲ್ಲಿ ಪ್ರಸಿದ್ಧಗಳಾದ) ನಾಮಗಳ ಬಳಕೆಯಾಗುತ್ತಿದ್ದು ಸರಳವಾಗಿ ಮತ್ತು ಶೀಘ್ರವಾಗಿ ಪರಮಾತ್ಮನ ಸ್ಮೃತಿ ತಂದುಕೊಡುವ ಕಾರಣ ವೈಷ್ಣವಾಚಮನವನ್ನು ಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಬಹಳವಾಗಿ ಪ್ರಶಂಸಿಸಿದ್ದಾರೆ. ಆದರೆ ಶ್ರೌತಾಚಮನ ಪದ್ಧತಿಯಲ್ಲೂ ತತ್ತ್ವಾಭಿಮಾನಿಗಳ ಸಂಸ್ಮರಣ ಪ್ರಾರ್ಥನಾ ರೂಪವಾದ ವಿಶಿಷ್ಟ ಹಿನ್ನೆಲೆ - ಅನುಸಂಧಾನ ಪದ್ಧತಿ ಇರುವುದರಿಂದ ಈ ಪದ್ಧತಿಗಳೆಲ್ಲ ಪ್ರಮಾಣ ಮೂಲಕವಾದುದರಿಂದ ಆಯಾಯಾ ಸಂಪ್ರದಾಯದಂತೆ ಆಚಮನ ಮಾಡಬೇಕು. ಆದರೂ ಶೀಘ್ರವಾಗಿ ಶ್ರೀಹರಿಯ ಅರಿವು ನೀಡುವ ತತ್ರ ಪ್ರಸಿದ್ಧ ಶಬ್ದಗಳನ್ನೊಳಗೊಂಡ ಕೇಶವಾದಿ ನಾಮೋಚ್ಚರಿಸುವುದು ಸೂಕ್ತವೆನಿಸುವುದು.

### ಸ್ನಾನವಿಧಿ

ಪ್ರಾತಃಸ್ನಾನವು ಗ್ರಹಪೀಡಾ - ದಾರಿದ್ರ್ಯ - ದುಃಸ್ವಪ್ನ ಸೂಚಿತವಾದ ಮುಂದೊದಗುವ ಅನಿಷ್ಟ ಮುಂತಾದವನ್ನು ನಿವಾರಿಸುತ್ತದೆ. ಇಂತಹ ಸ್ನಾನವು ಸಂಕಲ್ಪ - ಸೂಕ್ತಪಠನ - ಮಾರ್ಜನ - ಅಘಮರ್ಷಣ - ದೇವಾದಿ ತರ್ಪಣವೆಂಬುದಾಗಿ ಐದು ಅಂಗಗಳನ್ನು ಒಳಗೊಂಡಿದೆ. ಅನಂತರ ಭಗವಂತನ ನಾಮಸ್ಮರಣೆ ಮಾಡುತ್ತ ಸಕಲತೀರ್ಥಾಭಿಮಾನಿ -ವೇದಾಭಿಮಾನಿ - ಮತ್ತು ಇಂದ್ರಾದಿ ದೇವತೆಗಳ ಸನ್ನಿಧಾನ ಪಾತ್ರವಾದ ಬಲಗಿವಿಯನ್ನು ಮುಟ್ಟಬೇಕು. ಮೂತ್ರವಿಸರ್ಜನಾನಂತರ ಎರಡು ಬಾರಿ ಮಲವಿಸರ್ಜನಾನಂತರ ಎರಡು ಬಾರಿ ಭೋಜನಾನಂತರ ಮೂರು ಬಾರಿ ಆಚಮನ ಮಾಡಬೇಕು.

### ಸ್ನಾನವು ಐದು ಬಗೆ

೧. ಮಲ ಸ್ನಾನ ೨. ಮಂತ್ರ ಸ್ನಾನ ೩. ಧ್ಯಾನ ಸ್ನಾನ ೪. ವಾರುಣ ಸ್ನಾನ ೫. ಜಲಸ್ನಾನ ಎಂಬುದಾಗಿ ಸ್ನಾನವು ಐದು ತೆರನಾಗಿದೆ.

### ೧. ಮಲಸ್ನಾನ

ನೀರಿನಲ್ಲಿ ಮೂರು ಬಾರಿ ಮುಳುಗಿ ಶೀಗೆಪುಡಿ ಗೋಮಯಾದಿಗಳಿಂದ ಎಲ್ಲಾ ಅಂಗಾಂಗಗಳನ್ನು ತೊಳೆದುಕೊಂಡು ಮತ್ತೆ ಮೂರು ಬಾರಿ ಮುಳುಗಿ ಪರಮಾತ್ಮನನ್ನು ಧ್ಯಾನಿಸಬೇಕು. ಇದು ಮಲ ನಿವಾರಕವಾದ ಮಲಸ್ನಾನವೆನ್ನಿಸಿದೆ. ತೀರ್ಥದಲ್ಲಿ ಸ್ನಾನ

ಮಾಡಲು ಸಾಧ್ಯವಿಲ್ಲದಲ್ಲಿ ಬಿಸಿನೀರಿನಲ್ಲಿ ತಣ್ಣೀರು ಸೇರಿಸಿ ತುಲಸೀ ಮೃತ್ತಿಕೆಯನ್ನು ಅದರಲ್ಲಿ ಹಾಕಿ ಗಾಯತ್ರೀ ಮಂತ್ರದಿಂದ ಅಭಿಮಂತ್ರಿಸಿ ಆ ನೀರಿನಿಂದ ಸ್ನಾನ ಮಾಡಬೇಕು. ಮನೆಯಲ್ಲಿ ಬಾವಿಯಿಂದ ಅಥವಾ ನಳ್ಳಿಯಿಂದ ಹಿಂದೆಯೇ ಸಂಗ್ರಹಿಸಿಟ್ಟ ನೀರಿನಿಂದ ಸ್ನಾನ ಮಾಡುವಾಗ ನದೀ ಸರೋವರ ಸ್ನಾನಗಳಲ್ಲಿ ನೀಡುವ ಸ್ನಾನಾಂಗವಾದ ದೇವ - ಋಷಿ ಪಿತೃತರ್ಪಣವನ್ನು ಮಾಡಬಾರದು. 'ನಾಸ್ತ್ಯುದ್ಧೃತ ಜಲೇ ದೇವರ್ಷಿಪಿತೃತರ್ಪಣಮ್' (ಶ್ರೀ. ಟಿ.)

೨. ಮಂತ್ರಸ್ನಾನ

ಅಶಕ್ತನಾದಲ್ಲಿ ಮಂತ್ರಸ್ನಾನವನ್ನು ಮಾಡಬೇಕು. ಒದ್ದೆ ಬಟ್ಟೆಯಿಂದ ಶರೀರದ ಕೊಳೆಯನ್ನು ಒರೆಸಿಕೊಂಡು ಹಿಂದಿನ ವಸ್ತ್ರ ತೊರೆದು ಸ್ವಚ್ಛವಾದ ವಸ್ತ್ರವನ್ನು ಧರಿಸಿ ಆಚಮನ ಮಾಡಿ ಗಾಯತ್ರೀ ಅಥವಾ ಮೂಲಮಂತ್ರದಿಂದ ಮೂರುಬಾರಿ ಅಭಿಮಂತ್ರಿಸಿ ದರ್ಭೆ ಅಥವಾ ತುಲಸಿಯಿಂದ ಪ್ರೋಕ್ಷಣೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಜಲಾಭಿಮಾನಿ ದೇವತೆಗಳನ್ನು ಸ್ಮರಿಸಿ 'ಆಪೋ ಹಿ ಷ್ಠಾ' ಇತ್ಯಾದಿ ಮಂತ್ರಗಳಿಂದ ಪ್ರೋಕ್ಷಣವನ್ನು ಮಾಡಿಕೊಂಡು ಸಂಧ್ಯಾದಿಕರ್ಮವನ್ನು ಮಾಡಬೇಕು.

೩. ಧ್ಯಾನಸ್ನಾನ

ಅನಾರೋಗ್ಯದಿಂದ ಯಾವುದೇ ರೀತಿಯ ಸ್ನಾನ ಮಾಡಲು ಸಾಧ್ಯವಾಗದಿದ್ದಲ್ಲಿ, ತನ್ನ ತಲೆಯ ಮೇಲೆ ಸರ್ವಾಲಂಕಾರ ಭೂಷಿತನಾದ ಶ್ರೀಹರಿಯ ಸನ್ನಿಧಾನವನ್ನು ಚಿಂತಿಸಬೇಕು. ಅವನ ಪಾದಕಮಲಗಳಿಂದ ಹೊಮ್ಮಿದ ನೀರನ್ನು ಬ್ರಹ್ಮದೇವರು ಶ್ರೀಹರಿಯ ಪಾದ ಪ್ರಕ್ಷಾಲನೆಗೆ ತೆಗೆದುಕೊಂಡದ್ದನ್ನು ಮತ್ತು ರುದ್ರದೇವರು ಮುಡಿಯಲ್ಲಿ ಹೊತ್ತು ಶಿವನೆನಿಸಿದ ಗಂಗೆಯು, ನನ್ನ ಶಿರಸ್ಸಿನ ಮೇಲೆ ಹರಿದು ಸರ್ವಾಂಗಗಳನ್ನೂ ಪವಿತ್ರಗೊಳಿಸುತ್ತಿರುವಳೆಂದು ಧ್ಯಾನಿಸಬೇಕು. ಅನಂತರ ಆಚಮನ ಮಾಡಬೇಕು.

೪. ವಾರುಣಸ್ನಾನ

ಬಾವಿ-ಸರೋವರ ಮುಂತಾದವುಗಳಲ್ಲಿ ಶಾಸ್ತ್ರೋಕ್ತ ರೀತಿಯಿಂದ ಮುಳುಗು ಹಾಕಿ ಸ್ನಾನ ಮಾಡುವುದು ವಾರುಣ ಸ್ನಾನವೆನ್ನಿಸಿದೆ. 'ಅವಗಾಹಂ ತು ವಾರುಣಮ್'. ವಿಹಿತ ಕ್ರಮದಿಂದ ಜಲಸ್ನಾನ - ವಾರುಣಸ್ನಾನ -ಮಲಸ್ನಾನ ಮಾಡುವವರು ಮಂತ್ರಸ್ನಾನ ಧ್ಯಾನಸ್ನಾನಗಳನ್ನು ಮಾಡಲೇಬೇಕು.

೫. ಜಲಸ್ನಾನ

ಗಂಗೆ ಮೊದಲಾದ ತೀರ್ಥಗಳಲ್ಲಿ ಸರೋವರ ಬಾವಿ ಮುಂತಾದೆಡೆ

ಅವಗಾಹನ ಸ್ನಾನ ಮಾಡುವಾಗ ಸಂಕಲ್ಪ ಮಾಡಿ ನದ್ಯಭಿಮಾನಿ ದೇವತೆಗಳನ್ನು ಪ್ರಾರ್ಥಿಸಿ ಭಗವನ್ಮೂರ್ತಿಯನ್ನು ಧ್ಯಾನಿಸಿ ಸ್ನಾನ ಮಾಡಬೇಕು. ಅನಂತರ ನೀರಲ್ಲಿರುವಾಗಲೇ ದೇವ-ಋಷಿ-ಪಿತೃತರ್ಪಣ (ಸ್ನಾನಾಂಗ) ನೀಡಬೇಕು. ಇದು ಜಲಸ್ನಾನವೆನ್ನಿಸಿದೆ. ಇಲ್ಲಿ ಆಚರಿಸಬೇಕಾದ ವಿಶೇಷ ನಿಯಮಗಳನ್ನು ಆಚಾರ್ಯರು ಮುಂದಿನ ಶ್ಲೋಕಗಳಲ್ಲಿ ವಿಸ್ತಾರವಾಗಿ ನಿರೂಪಿಸಿದ್ದಾರೆ. ।। ೨ ।।

ಉದ್ಧೃತೇತಿ ಮೃದಾಽಽಲಿಪ್ಯ ದ್ವಿಷಡಷ್ಟಷಡಕ್ಷರೈಃ ।
ತ್ರಿರ್ನಿಮಜ್ಯಾಪ್ಯಸೂಕ್ತೇನ ಪ್ರೋಕ್ಷಯಿತ್ವಾ ಪುನಸ್ತತಃ ।
ಮೃದಾಽಽಲಿಪ್ಯ ನಿಮಜ್ಯ ತ್ರಿಃ ತ್ರಿರ್ಜಪೇದಘಮರ್ಷಣಮ್ ।। ೩ ।।

'ಉದ್ಧೃತಾಸಿ ವರಾಹೇಣ' ಎಂಬ ಮಂತ್ರದಿಂದ ತುಲಸೀ ಮೃತ್ತಿಕೆಯನ್ನು ಶರೀರಕ್ಕೆ ಲೇಪಿಸಿಕೊಂಡು ವಾಸುದೇವದ್ವಾದಶಾಕ್ಷರ ನಾರಾಯಣಾಷ್ಟಾಕ್ಷರ ವಿಷ್ಣುಷಡಕ್ಷರ ಮತ್ತು ಕೃಷ್ಣಷಡಕ್ಷರ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ ಮುಳುಗು ಹಾಕಿ ಆಚಮನ ಮಾಡಿ 'ಆಪೋ ಹಿ ಷ್ಠಾ' ಇತ್ಯಾದಿ ಮೂರು ಋಕ್ಕುಗಳಿಂದ ಶರೀರವನ್ನು ಪ್ರೋಕ್ಷಿಸಿಕೊಳ್ಳಬೇಕು. ಮತ್ತೊಮ್ಮೆ ತುಲಸೀ ಮೃತ್ತಿಕೆಯನ್ನು ಶರೀರಕ್ಕೆ ಲೇಪಿಸಿ ಮೂರು ಬಾರಿ ಮುಳುಗು ಹಾಕಿ 'ಋತಂ ಚ ಸತ್ಯಂ ಚ' ಎಂಬ ಅಘಮರ್ಷಣ ಸೂಕ್ತವನ್ನು ಪಠಿಸಬೇಕು.

ವಿವರಣೆ - ನದಿ ಸರೋವರ ಮುಂತಾದವುಗಳಲ್ಲಿ ಅವಗಾಹನ ಸ್ನಾನ ಮಾಡುವಾಗ ಅನುಸರಿಸಬೇಕಾದ ವಿಶೇಷ ನಿಯಮಗಳನ್ನು ಭಗವತ್ಪಾದರು ಇಲ್ಲಿ ನಿರೂಪಿಸಿದ್ದಾರೆ. ಸ್ಮೃತಿಮುಕ್ತಾವಲೀಕಾರರಾದ ಶ್ರೀಕೃಷ್ಣಾಚಾರ್ಯರು ಈ ಶ್ಲೋಕದ ಭಾವವನ್ನು ಸುಂದರವಾಗಿ ವಿವರಿಸಿದ್ದಾರೆ -

ವತ್ಸರ-ಋತು-ತಿಥಿ-ವಾರಗಳನ್ನು ಉಚ್ಚರಿಸಿ ವೇದೋಕ್ತ ಕರ್ಮಾನುಷ್ಠಾನ ಸಿದ್ಧಿಗಾಗಿ ಶ್ರೀಹರಿ ಪ್ರೀತಿಗಾಗಿ ಗಂಗಾದಿ ಸಕಲ ತೀರ್ಥ ಸ್ನಾನವನ್ನು ಮಾಡುತ್ತೇನೆಂದು ಸಂಕಲ್ಪಿಸಿ, ಮೂರು ಮುಳುಗು ಹಾಕಿ ನದಿಯ ದಡಕ್ಕೆ ಬಂದು ಎಲ್ಲಾ ಅಂಗಾಂಗಗಳನ್ನು ತಿಕ್ಕಿ ತೊಳೆದು ಸ್ನಾನ ಮಾಡಬೇಕು.

ಅನಂತರ ತುಲಸೀ ಮೃತ್ತಿಕೆಯನ್ನು ತೆಗೆದುಕೊಂಡು, ಮೂರು ಭಾಗ ಮಾಡಿ, 'ಗಂಧದ್ವಾರಾಂ' ಎಂಬ ಮಂತ್ರ ಪಠನದೊಂದಿಗೆ ಮತ್ತು 'ಉದ್ಧೃತಾಽಸಿ' ಎಂಬ ಮಂತ್ರದಿಂದ ಹಣೆ ಕೈಗಳು ಬಾಹು ಕಂಕುಳು ಮೊದಲಾದ ಅಂಗಗಳಿಗೆ ಮೃತ್ತಿಕೆಯನ್ನು ಲೇಪಿಸಬೇಕು. 'ಉದ್ಧೃತಾಽಸಿ' ಎಂಬ ಮಂತ್ರ ಪಾಠ ಹೀಗಿದೆ -

ಉದ್ಧೃತಾಽಸಿ ವರಾಹೇಣ ಕೃಷ್ಣೇನ ಶತಬಾಹುನಾ ।

ಮೃತ್ತಿಕೇ ಹರ ಮೇ ಪಾಪಂ ಯನ್ಮಯಾ ದುಷ್ಕೃತಂ ಕೃತಮ್ ।।

ಮೃತ್ತಿಕೇ ಬ್ರಹ್ಮದತ್ತಾಸಿ ಕಾಶ್ಯಪೇನಾಭಿಮಂತ್ರಿತಾ ।
ಮೃತ್ತಿಕೇ ದೇಹಿ ಮೇ ಪುಷ್ಟಿಂ ತ್ವಯಿ ಸರ್ವಂ ಪ್ರತಿಷ್ಠಿತಂ ।
ತ್ವಯಾ ಹತೇನ ಪಾಪೇನ ಗಚ್ಛಾಮಿ ಪರಮಾಂ ಗತಿಮ್ ।।

ಅನಂತರ ಮುಳುಗು ಹಾಕಿ ಎರಡನೇ ಬಾರಿ ಮೃತ್ತಿಕೆಯನ್ನು ಲೇಪಿಸಿಕೊಳ್ಳಬೇಕು. ಆಮೇಲೆ ಜಲಶಾಯಿಯಾದ ಶ್ರೀಮನ್ನಾರಾಯಣನಿಗೆ -

ನಮಃ ಕಮಲನಾಭಾಯ ನಮಸ್ತೇ ಜಲಶಾಯಿನೇ ।
ನಮಸ್ತೇಽಸ್ತು ಹೃಷೀಕೇಶ ಗೃಹಾಣಾರ್ಘ್ಯಂ ನಮೋಽಸ್ತು ತೇ ।।

ಎಂಬ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿಗೆ ಅರ್ಘ್ಯ ಕೊಡಬೇಕು.

ಅನಂತರ ತೀರ್ಥ ಮತ್ತು ಕ್ಷೇತ್ರಪಾಲನ ಅನುಜ್ಞೆಯನ್ನು -

ಅತಿತೀಕ್ಷ್ಣ ಮಹಾಕಾಯ ಕಲ್ಪಾಂತದಹನೋಪಮ ।
ಭೈರವಾಯ ನಮಸ್ತುಭ್ಯಂ ಅನುಜ್ಞಾಂ ದಾತುಮರ್ಹಸಿ ।।

ಎಂಬ ಮಂತ್ರ ಪಠನದೊಂದಿಗೆ ಸ್ನಾನಕ್ಕಾಗಿ ಪ್ರಾರ್ಥಿಸಬೇಕು. ಅನಂತರ -

ಸಮಸ್ತಜಗದಾಧಾರ ಶಂಖಚಕ್ರಗದಾಧರ ।
ದೇವ ದೇಹಿ ಮಮಾನುಜ್ಞಾಂ ಯುಷ್ಮತ್ತೀರ್ಥನಿಷೇವಣೇ ।।

ಎಂಬುದಾಗಿ ತೀರ್ಥಾಂತರ್ಯಾಮಿಯಾದ ಶ್ರೀಹರಿಯನ್ನು ಸ್ನಾನಕ್ಕೆ ಅನುಜ್ಞೆ ನೀಡಲು ಪ್ರಾರ್ಥಿಸಿ,

ನಂದಿನೀ ನಲಿನೀ ಸೀತಾ ಮಾಲತೀ ಚ ಮಲಾಪಹಾ ।
ವಿಷ್ಣುಪಾದಾಬ್ಜಸಂಭೂತಾ ಗಂಗಾ ತ್ರಿಪಥಗಾಮಿನೀ ।
ಭಾಗೀರಥೀ ಭೋಗವತೀ ಜಾಹ್ನವೀ ತ್ರಿದಶೇಶ್ವರೀ ।।

ಎಂಬುದಾಗಿ ಗಂಗೆಯನ್ನು ಸ್ಮರಿಸಿ, ಬೇರೆ ನದಿಗಳಲ್ಲಿ ಸ್ನಾನ ಮಾಡುವಾಗ ಆಯಾ ನದ್ಯಭಿಮಾನಿದೇವತೆಗಳನ್ನು ಸ್ಮರಿಸಿ,

ಏಹಿ ಸೂರ್ಯ ಸಹಸ್ರಾಂಶೋ ತೇಜೋರಾಶೇ ಜಗತ್ಪತೇ ।
ಅನುಕಂಪಯ ಮಾಂ ಭಕ್ತ್ಯಾ ಗೃಹಾಣಾರ್ಘ್ಯಂ ನಮೋಽಸ್ತು ತೇ ।।

ಎಂದು ಸೂರ್ಯನಿಗೂ, ಅರ್ಘ್ಯ ನೀಡಬೇಕು. ಅನಂತರ -

ಬ್ರಹ್ಮಕಮಂಡಲುಸಂಭೂತೇ ಪೂರ್ಣಚಂದ್ರನಿಭಾನನೇ ।
ತ್ರೈಲೋಕ್ಯವಂದಿತೇ ಗಂಗೇ ಗೃಹಾಣಾರ್ಘ್ಯಂ ನಮೋಽಸ್ತು ತೇ ।।
ವೃದ್ಧಗಂಗೇ ಮಹಾಪುಣ್ಯೇ ಗೌತಮಸ್ಯಾಘನಾಶಿನೀ ।
ಗೃಹಾಣಾರ್ಘ್ಯಂ ಮಯಾ ದತ್ತಂ ಗೋದಾವರಿ ನಮೋಽಸ್ತು ತೇ ।।

- ಎಂದು ಗಂಗೆ ಮತ್ತು ಗೋದಾವರಿಗೆ ಅರ್ಘ್ಯ ನೀಡಬೇಕು.

ನದಿಯಲ್ಲಿ ಪ್ರವಾಹಾಭಿಮುಖವಾಗಿ, ಸರೋವರದಲ್ಲಿ ಸೂರ್ಯಾಭಿಮುಖವಾಗಿ ಮೂರು ಮುಳುಗು ಹಾಕಬೇಕು.

ಅನಂತರ ಆಚಮನ-ಪ್ರಾಣಾಯಾಮ-ಹರಿಸ್ಮರಣೆ ಮಾಡಿ ಪುನಃ ಮೃತ್ತಿಕೆ ಲೇಪಿಸಿಕೊಂಡು 'ಓಂ ನಮೋ ಭಗವತೇ ವಾಸುದೇವಾಯ' ಎಂಬ ವಾಸುದೇವ ದ್ವಾದಶಾಕ್ಷರ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ ಮತ್ತು 'ಓಂ ನಮೋ ನಾರಾಯಣಾಯ' ಎಂಬ ನಾರಾಯಣಾಷ್ಟಾಕ್ಷರಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ 'ಓಂ ವಿಷ್ಣವೇ ನಮಃ' ಎಂಬ ಷಡಕ್ಷರ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ ಮುಳುಗು ಹಾಕಬೇಕು.

ಅಥವಾ, ಈ ಮೂರು ಮಂತ್ರಗಳನ್ನೂ ಪಠಿಸುತ್ತ ಮೂರು ಬಾರಿ ಮುಳುಗು ಹಾಕಬೇಕು. ಅಪ್ ದೇವತಾಕವಾದ ಸೂಕ್ತಗಳಿಂದ ಶಂಖಮುದ್ರೆಯಿಂದ ಯುಕ್ತವಾದ ಕೈಗಳನ್ನು ನೀರಲ್ಲಿ ಮುಳುಗಿಸುತ್ತಾ ಕ್ರಮವಾಗಿ ತಲೆ-ಎದೆ ಮತ್ತು ಸರ್ವಾಂಗಗಳಿಗೆ ಪ್ರೋಕ್ಷಣೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ನೀರಿಗೆ ಅಭಿಮಾನಿಯಾದ ಶ್ರೀಹರಿ ಮತ್ತು ಇತರ ದೇವತೆಗಳನ್ನು ವರ್ಣಿಸುವ ಮಂತ್ರಗಳು ಹೀಗಿವೆ -

೧. ಆಪೋ ವಾ ಇದಂ ಸರ್ವಮ್ । ವಿಶ್ವಾ ಭೂತಾನ್ಯಾಪಃ । ಪ್ರಾಣಾ ವಾ ಆಪಃ । ಪಶವ ಆಪೋಽನ್ನಮಾಪಃ । ಸಮ್ರಾಡಾಪೋ ವಿರಾಡಾಪಃ । ಸ್ವರಾಡಾಪಃ ಛಂದಾಂಸ್ಯಾಪಃ । ಜ್ಯೋತೀಂಷ್ಯಾಪಃ । ಸತ್ಯಮಾಪಃ । ಸರ್ವದೇವತಾ ಆಪಃ । ಭೂರ್ಭುವಸ್ಸುವರಾಪಃ । ಓಮ್ ।

೨. ಆಪೋ ಹಿ ಷ್ಠಾ ಮಯೋಭುವಃ । ತಾನ ಊರ್ಜೇ ದಧಾತನ । ಮಹೇರಣಾಯ ಚಕ್ಷಸೇ । ಯೋ ವಃ ಶಿವತಮೋ ರಸಃ । ತಸ್ಯ ಭಾಜಯತೇ ಹನಃ । ಉಶತೀರಿವ ಮಾತರಃ । ತಸ್ಮಾ ಅರಂಗಮಾಮವಃ । ಯಸ್ಯ ಕ್ಷಯಾಯ ಜಿನ್ವಥ । ಆಪೋ ಜನಯಥಾ ಚ ನಃ ।।

ಶ್ರೀಹರಿಯು ಎಲ್ಲಾ ಕಾಲದಲ್ಲೂ ಜೀವರನ್ನು ಚೆನ್ನಾಗಿ ಪರಿಪಾಲಿಸುತ್ತಾನೆ. 'ಆ' ಎಂದರೆ ಚೆನ್ನಾಗಿ 'ಪ' ಎಂದರೆ ಪಾಲಿಸುವವನು, ಎಂಬ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಪಾಪನಿವಾರಕನಾದ ಶ್ರೀಹರಿಯ ಹಿರಿಮೆಯನ್ನು ಬಣ್ಣಿಸುವ ಈ ಸೂಕ್ತಗಳು 'ಆಪ್ಯ' ಸೂಕ್ತಗಳೆನಿಸಿವೆ.

ಮೇಲೆ ತಿಳಿಸಿದ ಸೂಕ್ತಗಳಿಂದ ಪ್ರೋಕ್ಷಣೆ ಮಾಡಿಕೊಂಡು [illegible]

ಪರಿಪ್ರೀತಿಗಾಗಿ ಸ್ನಾನ ಮಾಡಬೇಕು. ಪುನಃ ಉಳಿದ ಮೃತ್ತಿಕೆಯನ್ನು ಮೂರು ಭಾಗ ಮಾಡಿ ಒಂದು ಭಾಗದಿಂದ ದ್ವಾದಶಪುಂಡ್ರ ಧರಿಸಬೇಕು. ಎರಡನೇ ಭಾಗವನ್ನು ಕಂಕುಳಿಗೂ ಮೂರನೆಯ ಭಾಗವನ್ನು ಸರ್ವಾಂಗಕ್ಕೂ ಲೇಪಿಸಿ ಹಿಂದಿನಂತೆಯೇ ವಾಸುದೇವದ್ವಾದಶಾಕ್ಷರಮಂತ್ರ ನಾರಾಯಣ ಅಷ್ಟಾಕ್ಷರ ವಿಷ್ಣುಷಡಕ್ಷರ ಮಂತ್ರಗಳಿಂದ ಮೂರು ಮುಳುಗು ಹಾಕಬೇಕು.

ಅನಂತರ ನೀರಲ್ಲಿ ನಿಂತು, ತನ್ನ ಸಂಕಲ್ಪಮಾತ್ರದಿಂದಲೇ ಮತ್ಸ್ಯಾದಿರೂಪಗಳನ್ನು ವ್ಯಕ್ತಗೊಳಿಸಿದ, ಬ್ರಹ್ಮಾದಿ ದೇವತೆಗಳನ್ನು ಸೃಷ್ಟಿಸಿದ ಅನಂತರ ಬ್ರಹ್ಮಾಂಡವನ್ನು ಪುನಃ ಅದರೊಳಗೆ ದೇವತೆಗಳನ್ನು ಹಾಗೂ ಸಕಲ ಲೋಕಗಳನ್ನೂ ಹಿಂದಿನ ಕಲ್ಪದಂತೆಯೇ ಸೃಷ್ಟಿಸಿದ ಅಪಾರ ಮಹಿಮನಾದ ಶ್ರೀಹರಿಯನ್ನು ಬಣ್ಣಿಸುವ ಅಘಮರ್ಷಣ ಸೂಕ್ತವನ್ನು ಪಠಿಸಬೇಕು.

ಋತಂ ಚ ಸತ್ಯಂ ಚಾಭೀದ್ಧಾತ್ ತಪಸೋಽಧ್ಯಜಾಯತ ।
ತತೋ ರಾತ್ರ್ಯಜಾಯತ ತತಃ ಸಮುದ್ರೋ ಅರ್ಣವಃ ॥
ಸಮುದ್ರಾದರ್ಣವಾದಧಿ ಸಂವತ್ಸರೋ ಅಜಾಯತ ।
ಅಹೋರಾತ್ರಾಣಿ ವಿದಧದ್ ವಿಶ್ವಸ್ಯ ಮಿಷತೋ ವಶೀ ।
ಸೂರ್ಯಾಚಂದ್ರಮಸೌ ಧಾತಾ ಯಥಾಪೂರ್ವಮಕಲ್ಪಯತ್ ।
ದಿವಂ ಚ ಪೃಥಿವೀಂ ಚಾಂತರಿಕ್ಷಮಥೋ ಸ್ವಃ ॥ ೩ ॥

ಸ್ರಷ್ಟಾರಂ ಸರ್ವಲೋಕಾನಾಂ ಸ್ಮೃತ್ವಾ ನಾರಾಯಣಂ ಪರಮ್ ।
ಯತಶ್ವಾಸೋ ನಿಮಜ್ಜ್ಯಾಪ್ಸು ಪ್ರಣವೇನೋತ್ಥಿತಸ್ತತಃ ।
ಸಿಂಚೇತ್ ಪುರುಷಸೂಕ್ತೇನ ಸ್ವದೇಹಸ್ಥಂ ಹರಿಂ ಸ್ಮರನ್ ॥ ೪ ॥

ಶ್ವಾಸವನ್ನು ನಿರೋಧಿಸಿಕೊಂಡು ನೀರಲ್ಲಿ ಮುಳುಗಿ ಅಘಮರ್ಷಣ ಸೂಕ್ತದಲ್ಲಿ ಬಣ್ಣಿಸಿದಂತೆ ವಿಶ್ವದ ಸ್ರಷ್ಟಾರನೂ ಸರ್ವೋತ್ತಮನೂ ಆದ ನಾರಾಯಣನನ್ನು ಸ್ಮರಿಸಿ, ಓಂಕಾರದ ಅರ್ಥಾನುಸಂಧಾನದೊಂದಿಗೆ ಪ್ರಣವ ಪ್ರತಿಪಾದ್ಯನಾದ ತನ್ನ ದೇಹದಲ್ಲಿರುವ ಶ್ರೀಹರಿಯನ್ನು ನೆನೆದು ಶಂಖಮುದ್ರೆಯಿಂದ ಪುರುಷಸೂಕ್ತವನ್ನು ಪಠಿಸುತ್ತ ತಲೆಗೆ ನೀರನ್ನು ಪ್ರೋಕ್ಷಿಸಿಕೊಳ್ಳಬೇಕು. (ಶಿರಸ್ಸಿನಲ್ಲಿ ಸನ್ನಿಹಿತನಾದ ಶ್ರೀಹರಿಗೆ ಇದು ಅಭಿಷೇಕವೆಂದು ಚಿಂತಿಸಿ ಅವನ ಪಾದೋದಕದಿಂದ ತಾನು ಪುನೀತನಾದೆನೆಂದು ಭಾವಿಸಬೇಕು. ಹೃಷೀಕೇಶತೀರ್ಥೀಯ ಪಾಠದಲ್ಲಿ 'ನಿಮಜ್ಜ್ಯಾಪ್ಸು' ಎಂಬ ಸ್ಥಾನದಲ್ಲಿ 'ನಿಮಗ್ನೋಽಪ್ಸು' ಎಂಬ ಪಾಠ ಇದೆ.)

ವಿವರಣೆ - ಸ್ನಾನವಿಧಿಯನ್ನೇ ಭಗವತ್ಪಾದರು ಇಲ್ಲೂ ನಿರೂಪಿಸುತ್ತಿದ್ದಾರೆ. ಅಘಮರ್ಷಣ ಸೂಕ್ತ ಪಠನಾನಂತರ ಶಾಲಗ್ರಾಮತೀರ್ಥವನ್ನು ಮೂರು ಬಾರಿ

ಸ್ವೀಕರಿಸಿ ನದಿಯ ನೀರಲ್ಲಿ ನಿಂತು ಸ್ನಾನಾಂಗ ದೇವ ಋಷಿ ಪಿತೃ ತರ್ಪಣ ನೀಡಬೇಕು-

**ದೇವತರ್ಪಣ**

"ಬ್ರಹ್ಮಾದಯೋ ಯೇ ದೇವಾಸ್ತಾನ್ ದೇವಾನ್ ತರ್ಪಯಾಮಿ । ಭೂರ್ದೇವಾನ್ ತರ್ಪಯಾಮಿ । ಭುವರ್ದೇವಾನ್ ತರ್ಪಯಾಮಿ । ಸ್ವರ್ದೇವಾನ್ ತರ್ಪಯಾಮಿ । ಭೂರ್ಭುವಃಸ್ವರ್ದೇವಾನ್ ತರ್ಪಯಾಮಿ ।" ಎಂಬುದಾಗಿ ನಾಲ್ಕು ಮಂತ್ರಗಳನ್ನು ಪಠಿಸುತ್ತ ಬಲಗೈಯ ಎಲ್ಲಾ ಬೆರಳುಗಳ ತುದಿಯ ಭಾಗದಿಂದ ದೇವತೆಗಳನ್ನು ಉದ್ದೇಶಿಸಿ ತರ್ಪಣ ನೀಡಬೇಕು.

**ಋಷಿತರ್ಪಣ**

"ಕೃಷ್ಣದ್ವೈಪಾಯನಾದಯೋ ಯೇ ಋಷಯಸ್ತಾನ್ ಋಷೀನ್ ತರ್ಪಯಾಮಿ । ಭೂಃ ಋಷೀನ್ ತರ್ಪಯಾಮಿ । ಭುವಃ ಋಷೀನ್ ತರ್ಪಯಾಮಿ । ಸ್ವಃ ಋಷೀನ್ ತರ್ಪಯಾಮಿ । ಭೂರ್ಭುವಃಸ್ವಃ ಋಷೀಂಸ್ತರ್ಪಯಾಮಿ ।" ಎಂಬುದಾಗಿ ಯಜ್ಞೋಪವೀತವನ್ನು ಮಾಲಾಕಾರವಾಗಿ ಹಾಕಿಕೊಂಡು ಬಲ ಅಂಗೈಯ ಎಡಭಾಗದಿಂದ ಋಷಿ ತರ್ಪಣ ನೀಡಬೇಕು.

**ಪಿತೃತರ್ಪಣ**

ಯಜ್ಞೋಪವೀತವನ್ನು ಎಡಕ್ಕೆ ಹಾಕಿಕೊಳ್ಳಬೇಕು. ಅನಂತರ "ಸೋಮಃ ಪಿತೃಮಾನ್ ಯಮೋಽಂಗಿರಾ ಅಗ್ನಿಷ್ವಾತ್ತಾಗ್ನಿ ಕವ್ಯವಾಹನಾದಯೋ ಯೇ ಪಿತರಸ್ತಾನ್ ಪಿತೄನ್ ತರ್ಪಯಾಮಿ । ಭೂಃ ಪಿತೄನ್ ತರ್ಪಯಾಮಿ । ಭುವಃ ಪಿತೄನ್ ತರ್ಪಯಾಮಿ । ಸ್ವಃ ಪಿತೄನ್ ತರ್ಪಯಾಮಿ । ಭೂರ್ಭುವಃಸ್ವಃ ಪಿತೄನ್ ತರ್ಪಯಾಮಿ ।" ಎಂಬುದಾಗಿ ಅಂಗುಷ್ಠ ಮೂಲದಿಂದ ಪಿತೃತರ್ಪಣ ನೀಡಬೇಕು. ದೇವತರ್ಪಣವನ್ನು ಪೂರ್ವಾಭಿಮುಖವಾಗಿ ಋಷಿತರ್ಪಣವನ್ನು ಉತ್ತರಾಭಿಮುಖವಾಗಿ ಮತ್ತು ಪಿತೃತರ್ಪಣವನ್ನು ದಕ್ಷಿಣಾಭಿಮುಖವಾಗಿಯೂ ನೀಡಬೇಕು. ಋಷಿ-ಪಿತೃತರ್ಪಣವನ್ನು ತಂದೆ ಇಲ್ಲದವರು ಮಾತ್ರ ನೀಡಬೇಕು.

**ಅಗ್ನಿದಗ್ಧರಿಗೆ ತರ್ಪಣ**

ಅಗ್ನಿದಗ್ಧಾಶ್ಚ ಯೇ ಜೀವಾಃ ಯೇಽಪಿ ಜಾತಾಃ ಕುಲೇ ಮಮ ।
ಭೂಮೌ ದತ್ತೇನ ತೋಯೇನ ತೃಪ್ತಾ ಯಾಂತು ಪರಾಂ ಗತಿಮ್ ॥

ಎಂಬ ಮಂತ್ರದಿಂದ ಬೆಂಕಿಯ ಅಪಘಾತ ಮುಂತಾದವುಗಳಿಂದ ದುರ್ಮರಣ ಪಡೆದ ಹಿಂದಿನ ತಲೆಮಾರಿನವರಿಗೆ ಸದ್ಗತಿಯನ್ನು ಪ್ರಾರ್ಥಿಸಿ ತರ್ಪಣ ನೀಡಬೇಕು.

ಶಿಖೋದಕ ತರ್ಪಣ

ಶಿಖೋದಕಂ ಭೂಪತಿತಂ ಪಿಬಂತಿ ಪಿತರೋಽಖಿಲಾಃ ।
ತಸ್ಮಾತ್ ಶಿಖೋದಕಂ ದದ್ಯಾದ್ ಪಿತ್ಯ್ಣಾಂ ತೃಪ್ತಿಹೇತವೇ ॥

ಎಂಬ ಮಂತ್ರ ಪಠಿಸಿ ಬಲಹೆಗಲ ಮೇಲೆ ಹಾಕಿಕೊಂಡಿರುವ ಜುಟ್ಟಿನ ಕೂದಲನ್ನು ಹಿಂಡಿ ತರ್ಪಣ ಕೊಡಬೇಕು.

ವಸ್ತ್ರ ನಿಷ್ಪೀಡನೋದಕ ತರ್ಪಣ

ಮೈ ಒರೆಸಿಕೊಳ್ಳಲು ಯಜುಃಶಾಖಿಗಳು ಸ್ನಾನಕಾಲಕ್ಕೆ ಸೊಂಟಕ್ಕೆ ಸುತ್ತಿದ, ಇತರ ಶಾಖೆಯವರು (ಅಧಿಕಾರಿಗಳು ಮಾತ್ರ) ಕೆಳಗಿರಿಸಿದ ವಸ್ತ್ರವನ್ನು ನಾಲ್ಕು ಭಾಗವಾಗಿ ಮಡಿಸಿ

ಯೇ ಕೇ ಚಾಸ್ಮತ್‌ಕುಲೇ ಜಾತಾಃ ಅಪುತ್ರಾ ಗೋತ್ರಿಣೋ ಮೃತಾಃ ।
ತೇ ಗೃಹ್ಣಂತು ಮಯಾ ದತ್ತಂ ವಸ್ತ್ರನಿಷ್ಪೀಡನೋದಕಮ್ ॥

ಎಂಬ ಮಂತ್ರ ಪಠಿಸುತ್ತಾ ವಸ್ತ್ರವನ್ನು ಹಿಂಡಿ ತರ್ಪಣ ನೀಡಬೇಕು. ಈ ತರ್ಪಣ ಕಾಲದಲ್ಲಿ ಯಜ್ಞೋಪವೀತವನ್ನು ಎಡಗಡೆ ಹಾಕಿಕೊಂಡಿರಬೇಕು.

ಯಕ್ಷ್ಮ ತರ್ಪಣ

ನಾವು ಸ್ನಾನ ಮಾಡುವಾಗ ನಮ್ಮ ದೇಹದ ಕೊಳೆಯನ್ನೆಲ್ಲ ನೀರಲ್ಲಿ ಬಿಟ್ಟಿರುತ್ತೇವೆ. ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ತೀರ್ಥವನ್ನು ನಾವು ಕಶ್ಮಲಗೊಳಿಸಿದ್ದೇವೆ. ಈ ಪಾಪ ಪರಿಹಾರಕ್ಕಾಗಿ ಯಕ್ಷ್ಮ ಎಂಬ ಜಲಾಭಿಮಾನಿ ದೇವತೆಯನ್ನು ತರ್ಪಣದ ಮೂಲಕ ಸಂತೋಷ ಪಡಿಸಬೇಕು. ಆ ಮಂತ್ರವು ಹೀಗಿದೆ

ಯನ್ಮಯಾ ದೂಷಿತಂ ತೋಯಂ ಶಾರೀರಮಲಸಂಭವಮ್ ।
ತತ್ಪಾಪಶೋಧನಾರ್ಥಾಯ ಯಕ್ಷ್ಮಾಣಂ ತರ್ಪಯಾಮ್ಯಹಮ್ ॥

ಸ್ನಾನಾಂಗ ತರ್ಪಣವನ್ನು ನೀರಲ್ಲೇ ನಿಂತು ನೀಡುವುದು ಪ್ರಶಸ್ತ. ಅಶಕ್ತರು ಒಣಗಿದ ವಸ್ತ್ರವನ್ನು ಧರಿಸಿಯೂ ಮಾಡಬಹುದು. ಪ್ರಾತಃ ಸ್ನಾನಾನಂತರ ತರ್ಪಣ ಕೊಡುವುದಕ್ಕಿಂತ ಪೂರ್ವದಲ್ಲಿ ಒರೆಸಿಕೊಳ್ಳಲು ಉಪಯೋಗಿಸುವ ವಸ್ತ್ರವನ್ನು ಹಿಂಡಬಾರದು. ಮಧ್ಯಾಹ್ನಸ್ನಾನದಲ್ಲಿ ಬ್ರಹ್ಮಯಜ್ಞಾಂಗ ತರ್ಪಣದ ನಂತರದಲ್ಲಿ ವಸ್ತ್ರವನ್ನು ಹಿಂಡಬೇಕು. ಒರೆಸಿಕೊಳ್ಳಲು ಬಳಸುವ ಸ್ನಾನ ವಸ್ತ್ರವನ್ನು ಅಪಸವ್ಯವಾಗಿ ನೆಲದ ಮೇಲೆಯೇ ಹಿಂಡಬೇಕು. ॥ ೪ ॥

**ವಸಿತ್ವಾ ವಾಸ ಆಚಮ್ಯ ಪ್ರೋಕ್ಷ್ಯಾಚಮ್ಯ ಚ ಮಂತ್ರತಃ ।**
**ಗಾಯತ್ರ್ಯಾ ಚಾಂಜಲಿಂ ದತ್ವಾ ಧ್ಯಾತ್ವಾ ಸೂರ್ಯಗತಂ ಹರಿಮ್ ॥ ೫ ॥**



ಸ್ನಾನಾನಂತರ ಒಣಗಿದ ವಸ್ತ್ರವನ್ನು ಉಟ್ಟುಕೊಂಡು ಆಚಮನ ಮಾಡಿ

(ಆಸನದಲ್ಲಿ ಕುಳಿತು ಗೋಪೀಚಂದನ ಮುದ್ರಾದಿಗಳನ್ನು ಧರಿಸಬೇಕು). 'ಆಪೋ ಹಿ ಷ್ಠಾ' ಇತ್ಯಾದಿ ಮಂತ್ರಗಳಿಂದ ಪ್ರೋಕ್ಷಣ ಮಾಡಿಕೊಂಡು 'ಸೂರ್ಯಶ್ಚ ಮಾಮನ್ಯುಶ್ಚ' ಇತ್ಯಾದಿ ಮಂತ್ರಗಳಿಂದ ನೀರನ್ನು ಅಭಿಮಂತ್ರಿಸಿ ಪ್ರಾಶನ ಮಾಡಿ, ಪುನಃ ತಮ್ಮ ತಮ್ಮ ಶಾಖೋಕ್ತ ರೀತಿಯಿಂದ 'ದಧಿಕ್ರಾವ್ಣೋ' ಇತ್ಯಾದಿ ಮಂತ್ರಗಳಿಂದ ಮಾರ್ಜನೆ ಮಾಡಿಕೊಂಡು ಸೂರ್ಯಾಂತರ್ಗತನಾದ ಶ್ರೀಮನ್ನಾರಾಯಣನನ್ನು ಧ್ಯಾನಿಸಿ ಗಾಯತ್ರೀ ಮಂತ್ರದಿಂದ ಮೂರು ಬಾರಿ ಅರ್ಘ್ಯ ನೀಡಬೇಕು.

ವಿವರಣೆ -

ವಸ್ತ್ರಧಾರಣ ಕ್ರಮ - 'ಶುಚಿ ವೋ ಹವ್ಯ ಮರುತಃ' ಎಂಬ ಮಂತ್ರವನ್ನುಚ್ಚರಿಸಿ ಒಣಗಿದ ಮಡಿಯಾದ ವಸ್ತ್ರವನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕು. 'ದೇವಸ್ಯ ತ್ವಾ' ಎಂಬ ಮಂತ್ರದಿಂದ ವಸ್ತ್ರಕ್ಕೆ ಪ್ರೋಕ್ಷಣೆ ಮಾಡಬೇಕು. 'ಭೂರ್ಭುವಃ ಸ್ವಃ' ಎಂಬ ವ್ಯಾಹೃತಿ ಮಂತ್ರದಿಂದ ಉಡಲು ಸಿದ್ಧಪಡಿಸಿ 'ಉದುತ್ಯಂ ಜಾತವೇದಸಂ' ಎಂಬ ಮಂತ್ರೋಚ್ಚಾರಣೆಯೊಂದಿಗೆ ಸೂರ್ಯನಿಗೆ ತೋರಿಸಬೇಕು. ಅಥವಾ ಸೂರ್ಯನನ್ನು ಸ್ಮರಿಸಿ, 'ಆವಹಂತೀ ವಿತನ್ವಾನಾ' ಎಂಬ ಮಂತ್ರದಿಂದ ವಸ್ತ್ರವನ್ನು ಉಟ್ಟುಕೊಂಡು ಎರಡು ಬಾರಿ ಆಚಮನ ಮಾಡಬೇಕು.

ಸಂಧ್ಯಾವಂದನೆ

ಗೋಪೀಚಂದನ - ಮುದ್ರೆಗಳನ್ನು ಶಾಸ್ತ್ರೋಕ್ತ ಕ್ರಮದಿಂದ ಧರಿಸಿ, ಸಂಧ್ಯಾವಂದನೆ ಪ್ರಾರಂಭಿಸಬೇಕು. ತುಳಸೀ ನಿರ್ಮಾಲ್ಯದಿಂದ ಮಂತ್ರಪೂತವಾದ ಜಲವನ್ನು ತಲೆಯ ಮೇಲೆ ಪ್ರೋಕ್ಷಣೆ ಮಾಡಿಕೊಂಡವನು ಗಂಗಾಸ್ನಾನ ಫಲ ಮತ್ತು ನೂರು ಹಸುಗಳನ್ನು ದಾನ ಮಾಡಿದ ಪುಣ್ಯವನ್ನು ಪಡೆಯುವನು. ಆದ್ದರಿಂದ ತುಲಸೀದಲದಿಂದಲೇ ಮಾರ್ಜನ ಮಾಡಿಕೊಳ್ಳಬೇಕು -

ತುಲಸೀಪತ್ರಗಲಿತಂ ಯಸ್ತೋಯಂ ಶಿರಸಾ ವಹೇತ್ ।
ಗಂಗಾಪುಣ್ಯಮವಾಪ್ನೋತಿ ಶತಧೇನುಫಲಂ ಲಭೇತ್ ।। ೫ ।।

**ಮಂತ್ರತಃ ಪರಿವೃತ್ಯಾಥ ಸಮಾಚಮ್ಯ ಸುರಾದಿಕಾನ್ ।**
**ತರ್ಪಯಿತ್ವಾ ನಿಪೀಡ್ಯಾಥ ವಾಸೋ ವಿಸೃತ್ಯ ಚಾಂಜಸಾ ।। ೬ ।।**

'ಅಸಾವಾದಿತ್ಯೋ ಬ್ರಹ್ಮ' ಎಂಬ ಮಂತ್ರದಿಂದ ನೀರನ್ನು ಸುತ್ತಲೂ ಮಂಡಲಾಕಾರವಾಗಿ ಚೆಲ್ಲಬೇಕು. ಅನಂತರ ಮತ್ತೆ ಆಚಮನ ಮಾಡಿ ಬ್ರಹ್ಮಾದಿ ದೇವತೆಗಳಿಗೆ [illegible] ಕೇಶವ [illegible] ಮೊದಲಾದ [illegible] ತರ್ಪಣ ನೀಡಿ ಪೂರ್ವದಲ್ಲಿ ಧರಿಸಿಬಿಟ್ಟಿದ್ದ ಒದ್ದೆಯಾದ ವಸ್ತ್ರವನ್ನು ಹಿಂಡಬೇಕು.

